इति सप्तमी दशतिः ॥ ७ ॥ पञ्चमः खण्डः ॥ ५ ॥

[स्व॰ ५ । उ॰ २ | धा॰ ३९ | फो ॥]

दशतिः (८)

(१-१०) १ विश्वामित्रो गाथिनः; २ मधुच्छन्दा वैश्वामित्रः; ३ कुसिदी काण्वः; ४ प्रियमेध आंगिरसः; ५, ८ वामदेवो गौतमः; ६, ९ श्रुतकक्षः सुकक्षो वा आंगिरसः (९ ऋ॰ सुकक्ष आंगिरसः); ७ मेदतिथिः काण्वः; १० बिन्दुः पूतदक्षो वा आंगिरसः ॥ इन्द्रः (४ ऋ॰ ७ सदसस्पतिः; १० मरुतः) ॥ गायत्री ॥

१. इदꣳ ह्यन्वोजसा सुतꣳ राधानां पते ।
पिबा त्वा३स्य गिर्वणः ॥ १६५ ॥ १.२.६.१

२. महाꣳ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे ।
द्यौर्न प्रथिना शवः ॥१६६ ॥ १.२.६.२

३. आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभꣳ सं गृभाय ।
महाहस्ती दक्षिणेन ॥ १६७ ॥ १.२.६.३

४. अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
सूनुꣳ सत्यस्य सत्पतिम् ॥ १६८ ॥ १.२.६.४

५. कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ १६९ ॥ १.२.६.५

६. त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
आ च्यावयस्यूतये । ॥ १७० ॥ १.२.६.६

७. सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥ १७१ ॥ १.२.६.७

८. ये तेपन्था अधो दिवो येभिर्व्यश्वमैरयः ।
उत श्रोषन्तु नो भुवः ॥ १७२ ॥ १.२.६.८

९. भद्रंभद्रं न आ भरेषमूर्जꣳ शतक्रतो ।
यदिन्द्र मृडयासि नः ॥ १७३ ॥ १.२.६.९

१०. अस्ति सोमो अयꣳ सुतः पिबन्त्यस्य मरुतः ।
उत स्वराजो अश्विना ॥ १७४ ॥ १.२.६.१०

इति अष्टमी दशतिः ॥ ८ ॥ षष्ठः खण्डः ॥ ६ ॥

[स्व॰ १२ । उ॰ १ | धा॰ ४० | चौ ॥]

दशतिः (९)

(१-१०) १, देवजामय इन्द्रमातरः; २ गोधा ऋषिकाः; ४ दध्यङ्ङाथर्वणः; ४ प्रस्कण्वः काण्वः; ५ गोतमो राहूगणः; ६ मधुच्छन्दा वैश्वामित्रः; ७ वामदेवो गौतमः; ८ वत्सः काण्वः; ९ शुनःशेप आजीगर्तिः; १० उलो वातायनः; ॥ इन्द्रः (ऋ॰ ४ अश्विनौ; १० वायुः) ॥ गायत्री ॥

१. ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते ।
वन्वानासः सुवीर्यम् ॥ १७५ ॥ १.२.७.१

२. न कि देवा इनीमसि न क्या योपयामसि ।
मन्त्रश्रुत्यं चरामसि ॥१७६ ॥ १.२.७.२

३. दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण ।
स्तुहि देवꣳ सवितारम् ॥ १७७ ॥ १.२.७.३

४. एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
स्तुषे वामश्विना बृहत् । ॥ १७८ ॥ १.२.७.४

५. इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
जघान नवतीर्नव ॥ १७९ ॥ १.२.७.५

६. इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।
महाꣳ अभिष्टिरोजसा ॥ १८० ॥ १.२.७.६

७. आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि ।
महान्महीभिरूतिभिः ॥ १८१ ॥ १.२.७.७

८. ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥ १८२ ॥ १.२.७.८

९. अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥ १८३ ॥ १.२.७.९

१०. वात आ वातु भेषजꣳ शम्भु मयोभु नो हृदे ।
प्र न आयूꣳषि तारिषत् ॥ १८४ ॥ १.२.७.१०

इति नवमी दशतिः ॥ ९ ॥ सप्तमः खण्डः ॥ ७ ॥

[स्व॰ १० । उ॰ २ | धा॰ ४५ | फु ॥]

दशतिः (१०)

(१-९) १ कण्वो घौरः; २, ३, ९ वत्सः (ऋ॰ २, ९ वशोऽश्व्यः ) काण्वः; ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; ५ मदुच्छन्दा वैश्वामित्रः; ६ वामदेवो गौतमः; ७ इरिम्बिठी काण्वः; ८ सत्यधृतिर्वारुणिः ॥ इन्द्रः (ऋ॰ वरुणमित्रार्यमणः ८ आदित्यः ) ॥ गायत्री ॥

१. यꣳ रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा ।
न किः स दभ्यते जनः ॥ १८५ ॥ १.२.८.१

२. गव्यो षु णो यथा पुराश्वयोत रथया ।
वरिवस्या महोनाम् ॥१८६ ॥ १.२.८.२

३. इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् ।
एनामृतस्य पिप्युषीः ॥ १८७ ॥ १.२.८.३

४. अया धिया च गव्यया पुरुणामन्पुरुष्टुत ।
यत्सोमेसोम आभुवः ॥ १८८ ॥ १.२.८.४

५. पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसु ॥ १८९ ॥ १.२.८.५

६. क इमं नाहुषीष्वा इन्द्रꣳ सोमस्य तर्पयात् ।
स नो वसून्या भरात् । ॥ १९० ॥ १.२.८.६

७. आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् ।
एदं बर्हिः सदो मम ॥ १९१ ॥ १.२.८.७

८. महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः ।
दुराधर्षं वरुणस्य ॥ १९२ ॥ १.२.८.८

    १ २                 ३ १ २
९. त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।
    १ २
   स्मसि स्थातर्हरीणाम् ॥ १९३ ॥ १.२.८.९

इति दशमी दशतिः ॥ १० ॥ अष्टमः खण्डः ॥ ८ ॥

[स्व॰ ६ । उ॰ ४ | धा॰ ३५ | धु ॥]

इति द्वितीयप्रपाठके द्वितीयोऽर्धः द्वितीयः प्रपाठकश्च समाप्तः ॥

अथ तृतीयप्रपाठके प्रथमोऽर्धः ॥ ३-१ ॥

दशतिः (१)

(१-१०) १ प्रगाथः काण्वः; २, विश्वामित्रो गाथिनः;३, १० वामदेवो गौतमः; ४, ६ श्रुतकक्षः आङ्गिरसः; (ऋ॰ ४ सुकक्षोः वा; ६ सुकक्ष आंगिरसः); ५ मदुच्छन्दा वैश्वामित्रः; ७ गृत्समदः शौनकः; ८, ९ भरद्वाजः; (ऋ॰ ८ शंयुः ) बार्हस्पत्यः; ॥इन्द्रः (ऋ॰ इन्द्रापूषणौ ) ॥ गायत्री ॥

    १   २        ३  १  २      ३ १    २र
१. उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः ।
    १ २    ३ १ २
   अव ब्रह्मद्विषो जहि ॥ १९४ ॥ १.२.९.१

    १२    ३ १   २  ३२उ    ३ १ २
२. गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।
    २ ३    १ २ ३ १  २र
   इन्द्र त्वादातमिद्यशः ॥१९५ ॥ १.२.९.२

    १  २  ३   २ ३ १ २ ३२उ    ३  १     २र ३ २
३. सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् ।
    २ ३ २  ३२र    ३  १  २
   न देवो वृतः शूर इन्द्रः ॥ १९६ ॥ १.२.९.३

    १   २    ३   १ २     ३ १ २ ३    १ २
४. आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
   २उ      ३ १ २
   न त्वामिन्द्राति रिच्यते ॥ १९७ ॥ १.२.९.४

५. इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥ १९८ ॥ १.२.९.५

६. इन्द्र इषे ददातु न ऋभुक्षणमृभु॒रयिम् ।
वाजी ददातु वाजिनम् । ॥ १९९ ॥ १.२.९.६

७. इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् ।
स हि स्थिरो विचर्षणिः ॥ २०० ॥ १.२.९.७

८. इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः ।
गावो वत्सं न धेनवः ॥ २०१ ॥ १.२.९.८

९. इन्द्रा नु पूषणा वय॒ सख्याय स्वस्तये ।
हुवेम वाजसातये ॥ २०२ ॥ १.२.९.९

१०. न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
न क्येवं यथा त्वम् ॥ २०३ ॥ १.२.९.१०

इति प्रथमा दशतिः ॥ १ ॥ नवमः खण्डः ॥ ९ ॥

[स्व॰ ८ । उ॰ ७ | धा॰ ३५ | ठु ॥]

दशतिः (२)

(१-१०) १, ४ त्रिशोकः काण्वः; २, मदुच्छन्दा वैश्वामित्रः; ३ वत्सः काण्वः (ऋ॰ वशोऽश्व्यः); ५ सुकक्ष आंगिरसः ६, ९ वामदेवो गौतमः; ७ विश्वामित्रो गाथिनः; ८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; १० श्रुतकक्षः सुकक्षो वा आङ्गिरसः ॥ इन्द्रः ॥ गायत्री ॥

१. तरणिं वो जनानां त्रदं वाजस्य गोमतः ।
समानमु प्र शꣳसिषम् ॥ २०४ ॥ १.२.१०.१

२. असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।
सजोषा वृषभं पतिम् ॥ २०५ ॥ १.२.१०.२

३. सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा ।
मित्रास्पान्त्यद्रुहः ॥ २०६ ॥ १.२.१०.३

४. यद्वीडाविन्द्र यत्स्थिरे यत्पर्शिनो पराभृतम् ।
वसु स्पार्हं तदा भर ॥ २०७ ॥ १.२.१०.४

५. श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् ।
आशिषे राधसे महे ॥ २०८ ॥ १.२.१०.५

६. अरं त इन्द्र श्रवसे गमेम शूर त्वावतः ।
अरꣳ शक्र परेमणि । ॥ २०९ ॥ १.२.१०.६

७. धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।
इन्द्र प्रातर्जुषस्व नः ॥ २१० ॥ १.२.१०.७

८. अपां फेनेन नमुचे शिर इन्द्रोदवर्तयः ।
विश्वा यदजय स्पृधः ॥ २११ ॥ १.२.१०.८

९. इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः ।
तेषां मत्स्व प्रभूवसो ॥ २१२ ॥ १.२.१०.९

१०. तुभ्यꣳ सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो ।
स्तोतृभ्य इन्द्र मृडय ॥ २१३ ॥ १.२.१०.१०

इति द्वितीया दशतिः ॥ २ ॥ दशमः खण्डः ॥ १० ॥

[स्व° ८ । उ° २ | धा° ३३ | ठि ॥]

दशतिः (३)

(१-९) १ शुनःशेप आजीवर्तिः; २ श्रुतकक्ष आंगिरसः (ऋ° सुकक्षो आंगिरसो वा); ३ त्रिशोकः काण्वः; ४ मेदातिथिः काण्वः; ५ गोतमो राहूगणः; ६ ब्रह्मातिथिः काण्वः; ७ विश्वामित्रो गाथिनो जमदग्निर्वा; ८ प्रस्कण्वः काण्वः (ऋ° कण्वो घौरः); ९ मेदातिथिः काण्वः; ॥ इन्द्रः (ऋ° ५ विश्वेदेवाः); ६ अश्विनौ मित्रावरुणौ; ८ मरुतः; ९ विष्णुः ॥ गायत्री ॥

१. आ व इन्द्र कृविं यथा वाजयन्तः शतक्रतुम् ।
मꣳहिष्ठꣳसिञ्च इन्दुभिः ॥ २१४ ॥ १.२.११.१

२. अतश्चिदिन्द्र न उपा याहि शतवाजया ।
इषा सहस्रवाजया ॥ २१५ ॥ १.२.११.२

३. आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् ।
क उग्राः के ह श्रृण्विरे ॥ २१६ ॥ १.२.११.३

४. बृबदुक्थꣳहवामहे सृप्रकरस्नमूतये ।
साधः कृण्वन्तमवसे ॥ २१७ ॥ १.२.११.४

५. ऋजुनीती नो वरुणो मित्रो नयति विद्वान् ।
अर्यमा देवैः सजोषाः ॥ २१८ ॥ १.२.११.५

६. दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् ।
वि भानुं विश्वथातनत् ॥ २१९ ॥ १.२.११.६

७. आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजाꣳसि सुक्रतू ॥ २२० ॥ १.२.११.७

८. उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत ।
वाश्रा अभिज्ञु यातवे ॥ २२१ ॥ १.२.११.८

९. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पाꣳसुले ॥ २२२ ॥ १.२.११.९

इति तृतीया दशतिः ॥ ३ ॥ एकादश: खण्डः ॥ ११ ॥

[स्व० ६ । उ० १ | धा० ३९ | को ॥]

दशतिः (४)

(१-१०) १, ७, ८ मेदातिथिः काण्वः; २ वामदेवो गौतमः ३, ५ मेदातिथिः काण्वः प्रियमेधश्चाङ्गिरसः; ४ विश्वामित्रो गाथिनः; ६ दुर्मित्रः (सुमित्रो वा) कौत्सः; ९ विश्वामित्रो गाथिनोऽभीपाद् उदलो वा; १० श्रुतकक्षः (ऋ० सुकक्षो वा) आंगिरसः ॥ इन्द्रः ॥ गायत्री ॥

१. अतीहि मन्युषाविणꣳ सुषुवाꣳसमुपेरय ।
अस्य रातौ सुतं पिब ॥ २२३ ॥ १.२.१२.१

२. कदु प्रचेतसे महे वचो देवाय शस्यते ।
तदिध्यस्य वर्धनम् ॥ २२४ ॥ १.२.१२.२

३. उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
न गायत्रं गीयमानम् ॥ २२५ ॥ १.२.१२.३

४. इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः ।
हरिवान्त्सुताना३ सखा ॥ २२६ ॥ १.२.१२.४

५. आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः ।
महा३ इव युवजानिः ॥ २२७ ॥ १.२.१२.५

६. कदा वसो स्तोत्र३ हर्यत आ अव श्मशा रुधद्वाः ।
दीर्घ३ सुतम् वाताप्याय ॥ २२८ ॥ १.२.१२.६

७. ब्राह्मणादिन्द्र राधसः पिबा सोममृतू३रनु ।
तवेद३ सख्यमस्तृतम् ॥ २२९ ॥ १.२.१२.७

८. वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः ।
त्वं नो जिन्व सोमपाः ॥ २३० ॥ १.२.१२.८

९. एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः ।
सत्राजिदुग्र पौ३स्यम् ॥ २३१ ॥ १.२.१२.९

१०. एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।
एवा ते राध्यं मनः ॥ २३२ ॥ १.२.१२.१०

इति चतुर्थी दशतिः ॥ ४ ॥ द्वादशः खण्डः ॥ १२ ॥

[स्व ० १२ । उ० ना | धा० ३० | थौ ॥]

इति द्वितीयोऽध्यायः ॥ २ ॥

इत्यैकसामि समाप्तम् ॥

# अथ तृतीयोऽध्यायः ॥

दशतिः (५)

(१-१०) १, ६, ९ वसिष्ठो मैत्रवरुणिः; २ भरद्वाजः (ऋ० शंयुः;) बार्हस्पत्यः; ३ प्रस्कण्वः काण्वः; ४ नोधा गौतमः; ५ कलिः प्रागाथः; ७ मेदातिथिः काण्वः; ८ भर्गः प्रागाथः; १० प्रगाथो घौरः काण्वः ॥ इन्द्रः ९ मरुतः ॥ बृहती ॥

१. अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ २३३ ॥ १.३.१.१

२. त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ २३४ ॥ १.३.१.२

३. अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ २३५ ॥ १.३.१.३

४. तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ २३६ ॥ १.३.१.४

५. तरोभिर्वो विदद्वसुमिन्द्र२सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ २३७ ॥ १.३.१.५

६. तरणिरित्सिषासति वाजं पुरन्ध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ २३८ ॥ १.३.१.६

७. पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
आपिर्नो बोधि सधमाद्ये वृधे३स्मा२अवन्तु ते धियः ॥ २३९ ॥ १.३.१.७

८. त्वꣳह्येहि चेरवे विदा भगं वसुत्तये ।
उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ॥ २४० ॥ १.३.१.८

९. न हि वश्चरमं च न वसिष्ठः परिमꣳसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ॥ २४१ ॥ १.३.१.९

१०. मा चिदन्यद्वि शꣳसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणꣳसचा सुते मुहुरुक्था च शꣳसत ॥ २४२ ॥ १.३.१.१०

इति पञ्चमी दशतिः ॥ ५ ॥ प्रथमः खण्डः ॥ १ ॥

[स्व॰ १२ । उ॰ ५ | धा॰ ७३ | ञि ॥]

इति तृतीयप्रपाठके प्रथमोऽर्धः ॥

अथ तृतीयप्रपाठके द्वियीयोऽर्धः ॥ ३-२ ॥

दशतिः (६)

(१-१०) १, पुरुहन्मा आंगिरसः; २, ३ मेदातिथि-मेध्यातिथी काण्वौ; ४ विश्वामित्रो गाथिनः ५ गोतमो (गौतमो वा) राहूगणः; ६ नृमेधपुरुमेधावांगिरसौ; ७, ८, ९ मेदातिथिर्मेध्यातिथिर्वा (ऋ॰ मेध्यातिथिः) काण्वः; १० देवातिथिः काण्वः ॥ इन्द्रः ॥

बृहती ॥

१. न किष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ २४३ ॥ १.३.२.१

२. य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥ २४४ ॥ १.३.२.२

३. आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ २४५ ॥ १.३.२.३

४. आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताꣳ इहि ॥ २४६ ॥ १.३.२.४

५. त्वमङ्ग प्र शꣳसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ २४७ ॥ १.३.२.५

६. त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ २४८ ॥ १.३.२.६

७. इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रꣳसमीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ २४९ ॥ १.३.२.७

८. इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥ २५० ॥ १.३.२.८

९. उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ २५१ ॥ १.३.२.९

१०. यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ २५२ ॥ १.३.२.१०

इति षष्ठी दशतिः ॥ ६ ॥ द्वितीयः खण्डः ॥ २ ॥

[स्व० ११ । उ० ७ | धा० ७२ | खा ॥]

दशतिः (७)

(१-१०) १, भर्गः प्रागाथः; २, ८ रेभः काश्यपः; ३ जमदग्निर्भार्गवः; ४, ६ मेदातिथिः काण्वः (ऋ॰ मेध्यातिथिः काण्वः); ५, ६ नृमेधपुरुमेधावांगिरसौ; ७ वसिष्ठो मैत्रावरुणिः; १० भारध्वाजः (ऋ॰ शंयुः) बार्हस्पत्यः काण्वः; ॥ इन्द्रः ३ मित्रावरुणादित्याः ॥ बृहती ॥

१. शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ २५३ ॥ १.३.३.१

२. या इन्द्र भुज आभरः स्वर्वा२असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ २५४ ॥ १.३.३.२

३. प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
वरूथ्ये३वरुणे छन्द्यं वचः स्तोत्र२राजसु गायत ॥ २५५ ॥ १.३.३.३

४. अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ २५६ ॥ १.३.३.४

५. प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्र२हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ २५७ ॥ १.३.३.५

६. बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ २५८ ॥ १.३.३.६

७. इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि । ॥ २५९ ॥ १.३.३.७

८. मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परावृणक् ॥ २६० ॥ १.३.३.८

९. वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ २६१ ॥ १.३.३.९

१०. यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौ२स्या ॥ २६२ ॥ १.३.३.१०

इति सप्तमी दशतिः ॥ ७ ॥ तृतीयः खण्डः ॥ ३ ॥

[स्व० १० । उ० १ | धा० ६२ | पा ॥]

दशतिः (८)

(१-१०) १, मेदातिथिः (ऋ० मेध्यातिथिः) काण्वः; २ रेभः काश्यपः; ३ वत्सः (ऋ० वशोऽश्व्यः ); ४ भरध्वाजः (शंयुः) बार्हस्पत्यः; ५ नृमेध आंगिरसः; ६ पुरुहन्मा आंगिरसः; ७ नृमेध-पुरुमेधावांगिरसौ; ८ वसिष्ठो मैत्रावरुणिः ९ मेदातिथि-मेध्यातिथी काण्वौ १० कलिः प्रागाथः ॥ इन्द्रः ॥ बृहती ॥

१. सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ २६३ ॥ १.३.४.१

२. यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावा२आ विवासति ॥ २६४ ॥ १.३.४.२

३. अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
इन्द्रं नाम श्रुत्य२ शाकिनं वचो यथा ॥ २६५ ॥ १.३.४.३

४. इन्द्र त्रिधातु शरणं त्रिवरूथ२स्वस्तये ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ २६६ ॥ १.३.४.४

५. श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥ २६७ ॥ १.३.४.५

६. न सीमदेव आप तदिषं दीर्घायो मर्त्यः ।
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥ २६८ ॥ १.३.४.६

७. आ नो विश्वासु हव्यमिन्द्रꣳसमत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ २६९ ॥ १.३.४.७

८. तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते ॥ २७० ॥ १.३.४.८

९. क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
अलर्षि युध्म खजकृत्पुरन्दर प्र गायत्रा अगासिषु ॥ २७१ ॥ १.३.४.९

१०. वयमेनमिदा ह्योपीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ २७२ ॥ १.३.४.१०

इति अष्टमी दशतिः ॥ ८ ॥ चतुर्थः खण्डः ॥ ४ ॥

[स्व० १४ । उ० १ | धा० ७४ | ती ॥]

दशतिः (९)

(१-१०) १ पुरुहन्मा आंगिरसः; २ भर्गः प्रागाथः ३ इरिम्बिठिः काण्वः; ४ जमदग्निर्भार्गवः; ५, ७ देवादिथिः काण्वः; ८ वसिष्ठो मैत्रावरुणिः; ९ भरद्वाजो बार्हस्पत्यः; १० मेध्यः काण्वः ॥ इन्द्रः (ऋ० ३ वाम्तोष्पतिर्वा; ४ सूर्यः; ९ इन्द्राग्नी) ॥ बृहती ॥

१. यो राजा चर्षणीनां याता रथेभिरध्रिगु ।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ २७३ ॥ १.३.५.१

२. यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ २७४ ॥ १.३.५.२

३. वास्तोष्पते ध्रुवा स्थूणा३ंसत्र३ं सोम्यानाम् ।
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीना३ं सखा ॥ २७५ ॥ १.३.५.३

४. बण्महा३ं असि सूर्य बडादित्य महा३ंअसि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महा३ं असि ॥ २७६ ॥ १.३.५.४

५. अश्वी रथी सुरूप इद्गोमा३ंयदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ॥ २७७ ॥ १.३.५.५

६. यद्याव इन्द्र ते शत३ं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्र३ं सूर्या अनु न जातमष्ट रोदसी ॥ २७८ ॥ १.३.५.६

७. यदिन्द्र प्रागपागुदग्न्याग्व हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ २७९ ॥ १.३.५.७

८. कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाज३ं सिषासति ॥ २८० ॥ १.३.५.८

९. इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः ।
हित्वा शिरो जिह्वया रारपच्चरत्त्रि३ंशत्पदा न्यक्रमीत् । ॥ २८१ ॥ १.३.५.९

१०. इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शं तम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥ २८२ ॥ १.३.५.१०

इति नवमी दशतिः ॥ ९ ॥ पञ्चमः खण्डः ॥ ५ ॥

[स्व॰ १६ । उ॰ ५ | धा॰ ७२ | ङा ॥]

दशतिः (१०)

(१-१०) १ नृमेध आंगिरसः; २, ३ वसिष्ठो मैत्रावरुणिः; ४ भरद्वाजः (ऋ॰ शंयुः;) बार्हस्पत्यः; ५ परुच्छेपो दैवोदासिः; ६ वामदेवो गौतमः; ७ मेध्यातिथिः काण्वः; ८ भर्गः प्रागाथः; ९, १० मेधातिथि-मेध्यातिथी काण्वौ ॥ इन्द्रः (५ ऋ॰ आश्विनौ ) ॥ बृहती ॥

१. इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतारꣳ हेतारꣳ रथीतममतूर्तं तुग्रियावृधम् ॥ २८३ ॥ १.३.६.१

२. मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ २८४ ॥ १.३.६.२

३. सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे ।
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥ २८५ ॥ १.३.६.३

४. यः सत्राहा विचर्षणिरिन्द्रं तꣳ हूमहे वयम् ।
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे । ॥ २८६ ॥ १.३.६.४

५. शचीभिर्नः शचीवसू दिवानक्तं दिशस्यतम् ।
मा वाꣳ रातिरुप दसत्कदाचनास्मद्रातिः कदाचन ॥ २८७ ॥ १.३.६.५

६. यदा कदा च मीढुषे स्तोता जरेत मर्त्यः ।
आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम् ॥ २८८ ॥ १.३.६.६

७. पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे ।
यः सम्मिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ॥ २८९ ॥ १.३.६.७

८. उभयꣳ शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥ २९० ॥ १.३.६.८

९. महे च न त्वाद्रिवः परा शुल्काय दीयसे ।
न सहस्राय नायुताये वज्रिवो न शताय शतामघ ॥ २९१ ॥ १.३.६.९

१०. वस्याꣳइन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।
माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥ २९२ ॥ १.३.६.१०

इति दशमी दशतिः ॥ १० ॥ षष्ठः खण्डः ॥ ६ ॥

[स्व॰ १५ । उ॰ ४ | धा॰ ७३ | भू ॥]

इति तृतीयप्रपाठके द्वितीयोऽर्धः, तृतीयः प्रपाठकश्च समाप्तः ॥

अथ चतुर्थप्रपाठके प्रथमोऽर्धः ॥ ४-१ ॥

दशतिः (१)

(१-१०) १ वसिष्ठो मैत्रावरुणिः; २, ६, ७ वामदेवो गौतमः; ३ मेधातिथि-मेध्यातिथी काण्वौ, विश्वामित्र इत्येके ४ नोधा गौतमः ५ मेधातिथिः (ऋ॰ मेध्यातिथिः) काण्वः ८ श्रुष्टिगुः काण्वः ९ मेध्यातिथिः (मेध्यातिथिर्वा) काण्वः; १० नृमेध आंगिरसः ॥ इन्द्रः , ७ बहुः ॥ बृहती ॥

१. इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।
ताꣳआ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥ २९३ ॥ १.३.७.१

२. इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥ २९४ ॥ १.३.७.२

३. आ त्वा३द्य सबर्दुघाꣳहुवे गायत्रवेपसम् ।
इन्द्रं धेनुꣳसुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥ २९५ ॥ १.३.७.३

४. न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः ।
यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते ॥ २९६ ॥ १.३.७.४

५. क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥ २९७ ॥ १.३.७.५

६. यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
अस्माकमꣳशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय ॥ २९८ ॥ १.३.७.६

७. त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥ २९९ ॥ १.३.७.७

८. कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ ३०० ॥ १.३.७.८

९. युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ ३०१ ॥ १.३.७.९

१०. त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ ३०२ ॥ १.३.७.१०

इति प्रथमा दशतिः ॥ १ ॥ सप्तमः खण्डः ॥ ७ ॥

दशतिः (२)

(१-१०) १, २, ७, ८ वसिष्ठो मैत्रावरुणिः; ३ अश्विनौ वैवस्वतौ; ४ प्रस्कण्वः काण्वः; ५ मेधातिथि-मेध्यातिथी काण्वौ; ६ देवातिथिः काण्वः; ९ नृमेध आंगिरसः; १० नोधाः गौतमः ॥ इन्द्रः, १ उषा; २, ३ (ऋ॰ ४) अश्विनौ ॥ बृहती ॥

१. प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥ ३०३ ॥ १.३.८.१

२. इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशं विशꣳहि गच्छथः ॥ ३०४ ॥ १.३.८.२

३. कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्मया क्षपमाणोꣳशुनेत्थमु आदुन्यथा ॥ ३०५ ॥ १.३.८.३

४. अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
तमश्विना पिबतं तिरो अह्न्यं धत्तꣳरत्नानि दाशुषे ॥ ३०६ ॥ १.३.८.४

५. आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं याचिषत् । ॥ ३०७ ॥ १.३.८.५

६. अध्वर्यो द्रावया त्वꣳ सोममिन्द्रः पिपासति ।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा । ॥ ३०८ ॥ १.३.८.६

७. अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ॥ ३०९ ॥ १.३.८.७

८. यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रꣳसिषम् ॥ ३१० ॥ १.३.८.८

९. त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ ३११ ॥ १.३.८.९

१०. प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥ ३१२ ॥ १.३.८.१०

इति द्वितीया दशतिः ॥ २ ॥ अष्टमः खण्डः ॥ ८ ॥

[स्व० १० । उ० ३ | धा० ७७ | वे ॥]

इति बृहती समाप्ताः ॥

दशतिः (३)

(१-१०) १, २, ६ वसिष्ठो मैत्रावरुणिः; ३ गातुरात्रेयः; ४ पृथुर्वैन्यः; ५ सप्तगुरांगिरसः; ७ गौरिवीतिः शाक्त्यः; ८ वेनो भार्गवः; ९ बृहपतिर्नकुलो वा; १० सुहोत्रो भारद्वाजः; ॥ इन्द्रः (ऋ० ५ इन्द्री वैकुण्ठः ) ८ वेनः ॥ त्रिष्टुप् ॥

१. असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ॥ ३१३ ॥ १.३.९.१

२. योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरूहूत प्र याहि ।
असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः ॥ ३१४ ॥ १.३.९.२

३. अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाꣳ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान्हन् ॥ ३१५ ॥ १.३.९.३

४. सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य कोना तना त्मना सह्यामात्वोताः ॥ ३१६ ॥ १.३.९.४

५. जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिꣳशूर गोनामस्मभ्यं चित्रं वृषणꣳरयिं दाः ॥ ३१७ ॥ १.३.९.५

६. इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः । ॥ ३१८ ॥ १.३.९.६

७. वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान् ॥ ३१९ ॥ १.३.९.७

८. नाके सुपर्णमुप यत्पतन्तꣳहृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ३२० ॥ १.३.९.८

९. ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३२१ ॥ १.३.९.९

१०. अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचाꣳस्यास्मै स्थविराय तक्षुः ॥ ३२२ ॥ १.३.९.१०

इति तृतीया दशतिः ॥ ३ ॥ नवमः खण्डः ॥ ९ ॥

[स्व॰ १३ । उ॰ ६ | धा॰ ९१ | ट ॥]

दशतिः (४)

(१-९) १, २, ४ द्युतानो मारुतः (ऋ॰ तिरश्चीराङ्गिरसः); ३ बृहदुक्थो वामदेव्यः; ५ वामदेवोः गौतमः; ६, ८ वसिष्ठो मैत्रावरुणिः; ७ विश्वामित्रो गाथिनः; ९ गोरिवीतिः शाक्त्यः; ॥ इन्द्रः ॥ त्रिष्टुप् (६ ऋ॰ विराट्) ॥

१. अव द्रप्सो अꣳशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः ॥ ३२३ ॥ १.३.१०.१

२. वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ३२४ ॥ १.३.१०.२

३. विधुं दद्राणꣳ समने बहूनाꣳ युवानꣳ सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ३२५ ॥ १.३.१०.३

४. त्वꣳह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ ३२६ ॥ १.३.१०.४

५. मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभꣳ स्थिरप्स्नुम् ।
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥ ३२७ ॥ १.३.१०.५

६. प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ३२८ ॥ १.३.१०.६

७. शुनꣳहुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ॥ ३२९ ॥ १.३.१०.७

८. उदु ब्रह्माण्यैरत श्रवस्येन्द्रꣳ समर्ये महया वसिष्ठ ।
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचाꣳसि ॥ ३३० ॥ १.३.१०.८

९. चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ३३१ ॥ १.३.१०.९

इति चतुर्थी दशतिः ॥ ४ ॥ दशमः खण्डः ॥ १० ॥

दशतिः (५)

(१-१०) १ अरिष्टनेमिस्तार्क्ष्यः; २ भरद्वाजः (ऋ° गर्गो भारद्वाजः); ३ विमद ऐन्द्रः, वसुकृद्वा वासुक्रः (ऋ° प्राजापत्यो वा); ४-६, ९ वामदेवो गौतमः (ऋ° यमी वैवस्वती); ७ विश्वामित्रो गाथिनः; ८ रेणुर्वैश्वामित्रः; १० गोतमो राहूगणः ॥ इन्द्रः (ऋ° १ तार्क्ष्यः; ७ पर्वतेन्द्रौ; ९ यमो वैवस्वतः ) ॥ त्रिष्टुप् ॥

१. त्यमू षु वाजिनं देवजूतꣳ सहोवानं तरुतारꣳरथानाम् ।
अरिष्टनेमिं पृतनाजमाशुꣳस्वस्तये तार्क्ष्यमिहा हुवेम ॥ ३३२ ॥ १.३.११.१

२. त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रमिदꣳ हविर्मघवा वेत्विन्द्रः ॥ ३३३ ॥ १.३.११.२

३. यजामह इन्द्रं वज्रदक्षिणꣳहरीणाꣳरथ्या३विव्रतानाम् ।
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥ ३३४ ॥ १.३.११.३

४. सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभꣳसुवज्रम् ।
हन्ता यो वृत्रꣳ सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ३३५ ॥ १.३.११.४

५. यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा ।
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ३३६ ॥ १.३.११.५

६. यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
यꣳ शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयन्ते स इन्द्रः ॥ ३३७ ॥ १.३.११.६

७. इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतꣳसुवीराः ।
वीतꣳहव्यान्यध्वरेषु देवा वर्धेथां गीर्भीरिडया मदन्ता ॥ ३३८ ॥ १.३.११.७

८. इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ३३९ ॥ १.३.११.८

९. आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः ।
पितुर्नपातमा दधित वेधा अस्मिन्क्षये प्रतरां दीद्यानः ॥ ३४० ॥ १.३.११.९

१०. को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ३४१ ॥ १.३.११.१०

इति पञ्चमी दशतिः ॥ ५ ॥ एकादशः खण्डः ॥ ११ ॥

[स्व० १८ । उ० ४ | धा० ८३ | ढू ॥]

इति त्रिष्टुप् समाप्ता ॥

इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः ॥

अथ चतुर्थप्रपाठके द्वितीयोऽर्धः ॥ ४-२ ॥

दशतिः (६)

(१-१०) १ मधुच्छन्दा वैश्वामित्रः; २ जेता माधुच्छन्दसः; ३, ६ गोतमो राहूगणः; ४ अत्रिर्भौमः; ५, ८ तिरश्चीराङ्गिरसः; ७ नीपातिथिः काण्वः; ९ विश्वामित्रो गाथिनः; १० तिरश्चिरांगिरसः शंयुर्बार्हस्पत्यो वा;

॥ इन्द्रः ॥ अनुष्टुप् ॥

१. गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वꣳशमिव येमिरे ॥ ३४२ ॥ १.३.१२.१

२. इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमꣳरथीनां वाजानाꣳसत्पतिं पतिम् । ॥ ३४३ ॥ १.३.१२.२

३. इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३४४ ॥ १.३.१२.३

४. यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ॥ ३४५ ॥ १.३.१२.४

५. श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महा॑ असि ॥ ३४६ ॥ १.३.१२.५

६. असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रिय॑रजः सूर्यो न रश्मिभिः ॥ ३४७ ॥ १.३.१२.६

७. एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३४८ ॥ १.३.१२.७

८. आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ३४९ ॥ १.३.१२.८

९. एतो न्विन्द्र॑स्तवाम शुद्ध॑शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वा॑स॑शुद्धैराशीर्वान्ममत्तु ॥ ३५० ॥ १.३.१२.९

१०. यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३५१ ॥ १.३.१२.१०

इति षष्ठी दशतिः ॥ ६ ॥ द्वादशः खण्डः ॥ १२ ॥

[स्व॰ ४ । उ॰ ४ | धा॰ ५४ | धी ॥]

इति तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ॥

दशतिः (७)

(१-८) १ भद्वाजो बार्हस्पत्यः; २ वामदेवो गौतमः शाकपूतो वा; ३ प्रियमेध आङ्गिरसः; ४ प्रगाथः काण्वः; ५ श्यावाश्व आत्रेयः; ६ शंयुर्बार्हस्पत्यः; ७ वामदेवो गौतमः; ८ जेता माधुच्छन्दसः ॥ इन्द्रः; ५ मरुतः; ७ दधिक्रा वा

॥ अनुष्टुप् ॥

१. प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ ३५२ ॥ १.४.१.१

२. आ नो वयो वयःशयं महान्तं गह्वरेष्ठां महान्तं पूर्विनेष्ठाम् ।
उग्रं वचो अपावधी ॥ ३५३ ॥ १.४.१.२

३. आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्र२शविष्ठ सत्पतिम् । ॥ ३५४ ॥ १.४.१.३

४. स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥ ३५५ ॥ १.४.१.४

५. यदी वहन्त्याशवो भ्राजमाना रथेष्वा ।
पिबन्तो मदिरं मधु तत्र श्रवा२सि कृण्वते ॥ ३५६ ॥ १.४.१.५

६. त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
इन्द्रं विश्वासाहं नर२ शचिष्ठं विश्ववेदसम् ॥ ३५७ ॥ १.४.१.६

७. दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र न आयूꣳषि तारिषत् ॥ ३५८ ॥ १.४.१.७

८. पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः ॥ ३५९ ॥ १.४.१.८

इति सप्तमी दशतिः ॥ ७ ॥ इति प्रथमः खण्डः ॥ १ ॥

[स्व० ५ । उ० २ | धा० ४५ | पु ॥]

दशतिः (८)

(१-१०) १, ३, ५ प्रियमेध आङ्गिरसः; २, १० वामदेवो गौतमः; ४ मधुच्छन्दा वैश्वामित्रः; ६ भरद्वाजो बार्हस्पत्यः; ७ अत्रिर्भौमः; ८ प्रस्कण्वः काण्वः; ९ त्रित आप्त्य (ऋ० कुत्स आंगिरसो वा) ॥ इन्द्रः (६ ऋ० अग्निः) ८ उषाः; ९ विश्वेदेवाः ॥ अनुष्टुप् ॥

१. प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे ।
धिया वो मेधसातये पुरन्ध्या विवासति । ॥ ३६० ॥ १.४.२.१

२. कश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥ ३६१ ॥ १.४.२.२

३. अर्चत प्रार्चता नरः प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरमिद् धृष्ण्वर्चत ॥ ३६२ ॥ १.४.२.३

४. उक्थमिन्द्राय शꣳस्यं वर्धनं पुरुनिःषिधे ।
शक्रो यथा सुतेषु नो रारणत्सख्येषु च ॥ ३६३ ॥ १.४.२.४

५. विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ ३६४ ॥ १.४.२.५

६. स घा यस्ते दिवो नरो धिया मर्तस्य शमतः ।
ऊती स बृहतो दिवो द्विषो अꣳहो न तरति ॥ ३६५ ॥ १.४.२.६

७. विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अथा नो विश्वचर्षणे द्युम्नꣳसुदत्र मꣳहय ॥ ३६६ ॥ १.४.२.७

८. वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि ।
उषः प्रारन्नृतूꣳरनु दिवो अन्तेभ्यस्परि । ॥ ३६७ ॥ १.४.२.८

९. अमी ये देवा स्थन मध्य आ रोचने दिवः ।
कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ॥ ३६८ ॥ १.४.२.९

१०. ऋचꣳ साम यजामहे याभ्यां कर्माणि कृण्वते ।
वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥ ३६९ ॥ १.४.२.१०

इति अष्टमी दशतिः ॥ ८ ॥ द्वितीयः खण्डः ॥ २ ॥ इत्यनुष्टुभः ॥

[स्व॰ ७ । उ॰ ३ | धा॰ ५४ | जी ॥]

## दशतिः (९)

(१-११) १ रेभः काश्यपः; २ सुवेदाः शैलूषिः; ३ वामदेवो गौतमः; ४, ७, ८ सव्य आङ्गिरसः; ५ विश्वामित्रो गाथिनः; ६ कृष्ण आङ्गिरसः; ९ भरद्वाजो बार्हस्पत्यः; १० मेधातिथिः काण्वः (ऋ॰ मान्धाता यौवनाश्वः); ११ कुत्स आङ्गिरसः ॥ इन्द्रः; ९ द्यावापृथिवी ॥ जगती; १ अति जगती; १० महापङ्क्तिः ॥

१. विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ ३७० ॥ १.४.३.१

२. श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्दस्युं नर्यं विवेरपः ।
उभे यत्वा रोदसी धावतामनु भ्यसात्ते शुष्मात्पृथिवी चिदद्रिवः ॥ ३७१ ॥ १.४.३.२

३. समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम् ।
स पूर्व्यो नूतनमाजिगीषं तं वर्त्तनीरनु वावृत एक इत् ॥ ३७२ ॥ १.४.३.३

४. इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
न हि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति तद्धर्य नो वचः ॥ ३७३ ॥ १.४.३.४

५. चर्षणीधृतं मघवानमुक्थ्या३मिन्द्रं गिरो बृहतीरभ्यनूषत ।
वावृधानं पुरुहूतꣳ सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥ ३७४ ॥ १.४.३.५

६. अच्छा व इन्द्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजन्त जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥ ३७५ ॥ १.४.३.६

७. अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।
यस्य द्यावो न विचरन्ति मानुषं भुजे मꣳहिष्ठमभि विप्रमर्चत ॥ ३७६ ॥ १.४.३.७

८. त्यꣳसु मेषं महया स्वर्विदꣳशतं यस्य सुभुवः साकमीरते ।
अत्यं न वाजꣳ हवनस्यदꣳ रथमिन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥ ३७७ ॥ १.४.३.८

९. घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ३७८ ॥ १.४.३.९

१०. उभे यदिन्द्र रोदसी आपप्राथोषा इव । महान्तं त्वा महीनाꣳ सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ३७९ ॥ १.४.३.१०

११. प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्त२ सख्याय हुवेमहि ॥ ३८० ॥ १.४.३.११

इति नवम दशतिः ॥ ९ ॥ तृतीयः खण्डः ॥ ३॥

[स्व° १४ । उ° ७ | धा° ९३ | थि ॥]

इति जगत्यः ॥

दशतिः (१०)

(१-१०) १ नारदः काण्वः; २, ३ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; ४ पर्वतः काण्वः;

५-७, १० विस्वमना वैयश्व; ८ नृमेध आङ्गिरसः; ९ गोतमो राहूगणः ॥ इन्द्रः ॥ उष्णिक् ॥

१. इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
विदे वृधस्य दक्षस्य महा२हि षः ॥ ३८१ ॥ १.४.४.१

२. तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
इन्द्रं गीर्भिस्तवीषमा विवासत । ॥ ३८२ ॥ १.४.४.२

३. तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ३८३ ॥ १.४.४.३

४. यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये ।
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ ३८४ ॥ १.४.४.४

५. एदु मधोर्मदिन्तर२ सिञ्चाध्वर्यो अन्धसः ।
एवा हि वीरस्तवते सदावृधः ॥ ३८५ ॥ १.४.४.५

६. एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
प्र राधाꣳसि चोदयते महित्वना ॥ ३८६ ॥ १.४.४.६

७. एतो न्विन्द्रꣳ स्तवाम सखायः स्तोम्यं नरम् ।
कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ ३८७ ॥ १.४.४.७

८. इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥ ३८८ ॥ १.४.४.८

९. य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ३८९ ॥ १.४.४.९

१०. सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।
स्तुष ऊ षु वो नृतमाय धृष्णवे ॥ ३९० ॥ १.४.४.१०

इति दशमी दशतिः ॥ १० ॥ चतुर्थः खण्डः ॥ ४ ॥

[स्व॰ १० । उ॰ ४ | धा॰ ६२ | खा ॥]

इति चतुर्थप्रपाठकस्य द्वितीयोऽर्धः, चतुर्थः प्रपाठकश्च समाप्थः ॥

अथ पञ्चमप्रपाठके प्रथमोऽर्धः ॥ ५-१ ॥

दशतिः (१)

(१-१०) १ प्रगाथो घौरः काण्वः; २ भरद्वाजो बार्हस्पत्यः; ३ नृमेध आङ्गिरसः; ४ पर्वतः काण्वः; ५, ७ इरिम्बिठिः काण्वः; ६ विश्वमना वैयश्वः; ८ वसिष्ठो मैत्रावरुणिः ॥ इन्द्रः; ५, ७ आदित्याः ॥ उष्णिक्; ८ विराडुष्णिक् ॥

१. गृणे तदिन्द्र ते शव उपमां देवतातये ।
यद्धꣳसि वृत्रमोजसा शचीपते १.४.५.१

२. यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन् ।
अयꣳस सोम इन्द्र ते सुतः पिब ॥ ३९२ ॥ १.४.५.२

३. एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३९३ ॥ १.४.५.३

४. य इन्द्र सोमपातमो मदः शविष्ठ चेतति ।
येना हꣳसि न्यारत्रिणं तमीमहे ॥ ३९४ ॥ १.४.५.४

५. तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे ।
आदित्यासः समहसः कृणोतन ॥ ३९५ ॥ १.४.५.५

६. वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् ।
अहरहः शुन्ध्युः परिपदामिव ॥ ३९६ ॥ १.४.५.६

७. अपामीवामप स्त्रिधमप सेधत दुर्मतिम् ।
आदित्यासो युयोतना नो अꣳहसः ॥ ३९७ ॥ १.४.६.७

८. पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्याꣳ सुयतो नार्वा ॥ ३९८ ॥ १.४.५.८

इति प्रथमा दशतिः ॥ १ ॥ पञ्चमः खण्डः ॥ ५ ॥ इत्युष्णिहः ॥

[स्व॰ ५ । उ॰ २ | धा॰ ५१ | फ ॥]

दशतिः (२)

(१-१०) १ सौभरिः काण्वः; ७, ८ नृमेध आंगिरसः; ॥ इन्द्रः; ३, ६ मरुतः ॥ ककुप् ॥

१. अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
युधेदापित्वमिच्छसे ॥ ३९९ ॥ १.४.६.१

२. यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे ।
सखाय इन्द्रमूतये ॥ ४००॥ १.४.६.२

३. आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः ।
दृढा चिद्यमयिष्णवः ॥ ४०१ ॥ १.४.६.३

४. आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते ।
सोमꣳ सोमपते पिब ॥ ४०२ ॥ १.४.६.४

५. त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि ।
सꣳस्थे जनस्य गोमतः ॥ ४०३ ॥ १.४.६.५

६. गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः ।
रिहते ककुभो मिथः ॥ ४०४ ॥ १.४.६.६

७. त्वं न इन्द्रा भर ओजो नृम्णꣳ शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥ ४०५ ॥ १.४.६.७

८. अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मन्त उदभिः ॥ ४०६ ॥ १.४.६.८

९. सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।
अभि त्वामिन्द्र नोनुमः ॥ ४०७ ॥ १.४.६.९

१०. वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
वज्रिंचित्रꣳ हवामहे ॥ ४०८ ॥ १.४.६.१०

इति द्वितीया दशतिः ॥ २ ॥ षष्ठः खण्डः ॥ ६ ॥ इति ककुभः ॥ ६ ॥

[स्व॰ २ । उ॰ २ | धा॰ ४१ | छ ॥]



दशतिः (३)

(१-१०) १-८ गोतमो (सम्मदो वा) राहूगणः; ९ त्रितः आप्त्यः (ऋ॰ कुत्स आंगिरसो वा); १० अवस्युरात्रेयः ॥ इन्द्रः; ९ विश्वेदेवाः; १० आश्विनौ ॥ पङ्क्तिः ॥

१. स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ ४०९ ॥ १.४.७.१

२. इत्था हि सोम इन्मदो ब्रह्म चकार वर्धनम् ।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ ४१०॥ १.४.७.२

३. इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ ४११ ॥ १.४.७.३

४. इन्द्र तुभ्यमिदद्रिवोनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ॥ ४१२ ॥ १.४.७.४

५. प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यꣳसते ।
इन्द्र नृम्णꣳहि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ४१३ ॥ १.४.७.५

६. यदुदीरत आजयो धृष्णवे धीयते धनम् ।
युङ्क्ष्वा मदच्युता हरी कꣳहनः कं वसौ दधोऽस्माꣳइन्द्र वसौ दधः ॥ ४१४ ॥ १.४.७.६

७. अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ४१५ ॥ १.४.७.७

८. उपो षु शृणुही गिरो मघवन्मातथा इव ।
कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥ ४१६ ॥ १.४.७.८

९. चन्द्रमा अप्स्वाऽ३न्तरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ४१७ ॥ १.४.७.९

१०. प्रति प्रियतमꣳरथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृशि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतꣳहवम् ॥ ४१८ ॥ १.४.७.१०

इति तृतीया दशतिः ॥ ३ ॥ सप्तमः खण्डः ॥ ७ ॥

[स्व॰ १३ । उ॰ ५ | धा॰ ७५ | णु ॥]

दशतिः (४)

(१-८) १, ७ वसुश्रुत आत्रेयः; २, ४ विमद ऐन्द्रः (ऋ॰ प्राजापत्यो वा , वसुकृद्वा वासुकः); ३ सत्वश्रवा आत्रेयः; ५, ६ गोतमो राहूगणः; ८ अंहोमुग्वामदेव्यः (ऋ॰ कुल्मलबर्हिषः शैलूषिर्वा) ॥ अग्निः; ३ उषा; ४ सोमः; ५, ६ इन्द्रः; ८ विश्वेदेवाः ॥ पङ्क्तिः; ८ बृहती ॥

१. आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
युद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर । ॥ ४१९ ॥ १.४.८.१

२. आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ ४२०॥ १.४.८.२

३. महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ४२१ ॥ १.४.८.३

४. भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अथा ते सख्ये अन्धसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥ ४२२ ॥ १.४.८.४

५. क्रत्वा महा१ँ अनुष्वधं भीम आ वावृते शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवां दधे हस्तयोर्वज्रमायसम् ॥ ४२३ ॥ १.४.८.५

६. स घा तं वृषण१ँ रथमधि तिष्ठाति गोविदम् ।
यः पात्र१ँ हारियोजनं पूर्णमिन्द्रा चिकेतति योजा न्विन्द्र ते हरी ॥ ४२४ ॥ १.४.८.६

७. अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इष१ँ स्तोतृभ्य आ भर ॥ ४२५ ॥ १.४.८.७

८. न तम१ँहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ॥ ४२६ ॥ १.४.८.८

इति चतुर्थी दशतिः ॥ ४ ॥ अष्टमः खण्डः ॥ ८ ॥

[स्व० ७ । उ० ३ | धा० ५७ | जे ॥]

इति पङ्क्तयः ॥

दशतिः (५)

(१-१०) ऋण त्रसदस्यू; (ऋ० १, ३-५, १० अग्नेयो धिष्ण्या ऐश्वराः; २, ६ त्र्यरुणस्त्रैवृष्णः, त्रसदस्युः पौरुकुत्सः) ७ वसिष्ठो मैत्रावरुणिः; ८ वामदेवो गोतमः; ॥ पवमानः सोमः; ७ मरुतः; ८ अग्निः; ९ वाजिनः ॥ द्विपदा विराट् ८ पदपंक्तिः; ९ पुर उष्णिक्; २, ६ त्रिपदा अनुष्टुप्पिपीलिकामध्या ॥

१. परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ ४२७ ॥ १.४.९.१

२. पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ ४२८॥ १.४.९.२

३. पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ ४२९ ॥ १.४.९.३

४. पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ ४३० ॥ १.४.९.४

५. इन्दु पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ४३१ ॥ १.४.९.५

६. अनु हि त्वा सुतꣳ सोम मदामसि महे समर्यराज्ये ।
वाजाꣳ अभि पवमान प्र गाहसे । ॥ ४३२ ॥ १.४.९.६

७. क ई व्यक्ता नरः सनीडा रुद्रस्य मर्या अथा स्वश्वाः ॥ ४३३ ॥ १.४.९.७

८. अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् ।
ऋध्यामा त ओहैः ॥ ४३४ ॥ १.४.९.८

९. आविर्मर्या आ वाजं वाजिनो अग्मं देवस्य सवितुः सवम् ।
स्वर्गाꣳ अर्वन्तो जयत ॥ ४३५ ॥ १.४.९.९

१०. पवस्व सोम द्युम्नी सुधारो महाꣳ अवीनामनुपूर्व्यः ॥ ४३६ ॥ १.४.९.१०

इति पञ्चमी दशतिः ॥ ५ ॥ नवमः खण्डः ॥ ९ ॥

[स्व॰ ८ । उ॰ २ | धा॰ ३५ | ठु ॥]

इति पञ्चमप्रपाठकस्य प्रथमोऽर्धः ॥

अथ पञ्चमप्रपाठकस्य द्वियीयोऽर्धः ॥ ५-२ ॥

दशतिः (६)

(१-१०) त्रसदस्युः ७ संवर्त आंगिरसः; ॥ इन्द्रः; ६ विश्वेदेवाः; ७ उषाः ॥ द्विपदा विराट् ॥

१. विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे ॥ ४३७ ॥ १.४.१०.१

२. एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ ४३८॥ १.४.१०.२

३. ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४३९ ॥ १.४.१०.३

४. अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४४० ॥ १.४.१०.४

५. शं पदं मघं रयीषिणो न काममव्रतो हिनोति न स्पृशद्रयिम् ॥ ४४१ ॥ १.४.१०.५

६. सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥ ४४२ ॥ १.४.१०.६

७. आ याहि वनसा सह गावः सचन्त वर्त्तनिं यदूधभिः ॥ ४४३ ॥ १.४.१०.७

८. उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥ ४४४ ॥ १.४.१०.८

९. अर्चन्त्यर्कं मरुतः स्वर्क्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥ ४४५ ॥ १.४.१०.९

१०. प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥ ४४६ ॥ १.४.१०.१०

इति षष्ठी दशतिः ॥ ६ ॥ दशमः खण्डः ॥ १० ॥

[स्व० ७ । उ० २ | धा० ४२ | ष्ठा ॥]

दशतिः (७)

(१-१०) १ पृषध्रः काण्वः; २, ३, ४ बन्धुः सुबन्धुः श्रुतवन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना व; ५ संवर्त आंगिरसः; ६ भुवन आप्त्यः , साधनो वा भौवनः; ७ कवष ऐलूषः; ८ भरद्वाजो बार्हस्पत्यः; ९ आत्रेयः; १० वसिष्ठो मैत्रावरुणिः ॥ अग्निः; ५ उषाः; ६, ७,९ विश्वेदेवाः; ३, ४, ८, १० इन्द्रः ॥ द्विपदा विराट्; १० एकपदा ॥

१. अचेत्यग्निश्चिकितिर्हव्यवाड्न सुमद्रथः ॥ ४४७ ॥ १.४.११.१

२. अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ ४४८॥ १.४.११.२

३. भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥ ४४९ ॥ १.४.११.३

४. विश्वस्य प्र स्तोभ पुरो वा सन्यदि वेह नूनम् ॥ ४५० ॥ १.४.११.४

५. उषा अप स्वसुष्टमः सं वर्त्तयति वर्त्तनिꣳ सुजातता ॥ ४५१ ॥ १.४.११.५

६. इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ ४५२ ॥ १.४.११.६

७. वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः । ॥ ४५३ ॥ १.४.११.७

८. अया वाजं देवहितꣳ सनेम मदेम शतहिमाः सुवीराः ॥ ४५४ ॥ १.४.११.८

९. ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ॥ ४५५ ॥ १.४.११.९

१०. इन्द्रो विश्वस्य राजति ॥ ४५६ ॥ १.४.११.१०

इति सप्तमी दशतिः ॥ ७ ॥ एकादशः खण्डः ॥ ११ ॥

[स्व॰ ५ । उ॰ ४ | धा॰ ४१ | भ ॥]

## दशतिः (८)

(१-१०) १ , १० गृत्समदः शौनकः; २ गौरांगिरसः; ३, ५, ९ परुच्छेपो दैवोदासिः; ४ रेभः काश्यपः; ६ एवयामरुदात्रेयः; ७ अनानतः पारुच्छेपिः; ८ नकुलः ॥ १, ३, ४, १० इन्द्रः; २ सूर्यः ५ विश्वेदेवाः; ६ मरुतः; ७ पवमानः सोमः; ८ सविता; ९ अग्निः ॥ १, १० अष्टिः (१० अतिशक्करी वा); ३, ५, ७-९ अत्यष्टिः; २, ४, ६ अतिजगती (अष्टिर्वा ?) ॥

१. त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्त्तवे महामुरुꣳसैनꣳसश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम् ॥ ४५७ ॥
१.४.१२.१

२. अयꣳ सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म ।
ब्रध्नः समीचीरुषसः समैरयदरेपसः स चेतसः स्वसरे मन्युमन्तश्चिता गोः ॥ ४५८॥ १.४.१२.२

३. एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्पतिः ।
हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न पितरं वाजसातये मꣳहिष्ठं वाजसातये ॥ ४५९ ॥
१.४.१२.३

४. तमिन्द्रं जोहवीमि मघवानमुग्रꣳ सत्रा दधानमप्रतिष्कुतꣳ श्रवाꣳसि भूरि ।
मꣳहिष्ठो गीर्भिरा च यज्ञियो ववर्त्त राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४६० ॥ १.४.१२.४

५. अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे ।
यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे । अ
ध प्र नूनमुप यन्ति धीतयो देवाꣳअच्छा न धीतयः ॥ ४६१ ॥ १.४.१२.५

६. प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ ४६२ ॥ १.४.१२.६

७. अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ४६३ ॥ १.४.१२.७

८. अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ४६४ ॥ १.४.१२.८

९. अग्निँ३होतारं मन्ये दास्वन्तं वसोः सूनुँ३ सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ ४६५ ॥ १.४.१२.९

१०. तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जँ३शतक्रतुर्विदेदिषम् ॥ ४६६ ॥ १.४.१२.१०

इति अष्टमी दशतिः ॥ ८ ॥ द्वादशः खण्डः ॥ १२ ॥

[स्व° ३ । उ° ६ | धा° १० | ट ॥]

॥ इत्यैन्द्रं पर्व काण्डां वा समाप्तम् ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

ऐन्द्रकाण्डस्य मन्त्रसंख्या ११४

तत्र

| | | | |
|---|---|---|---|
| गायत्र्यः | ४६७-५१० | (४४) | |
| बृहत्यः | ५११-५२२ | (१२) | |
| त्रिष्टुभः | ५२३-५४४ | (२२) | |
| अनुष्टुभः | ५४५-५५३ | (९) | [तत्र "आहर्यत" इति ५५१ बृहती] |
| जगत्यः | ५५४-५६५ | (१२) | |
| उष्णिक्ककुभः | ५६६-५८५ | (२०) | |
| | | ११९ | |

# ॥ अथ पावमानं काण्डम् ॥

## अथ पञ्चमोऽध्यायः ॥

दशतिः (९)

(१-१०) १, ४ अमहीयुराङ्गिरसः; २ मधुच्छन्दा वैश्वामित्रः; ३ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ५ त्रित आप्त्य; ६ कश्यपोः मारीचः; ७ जमदग्निर्भार्गवः; ८ दृढच्युत आगस्त्यः; ९, १० असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

१. उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
उग्रꣳशर्म महि श्रवः ॥ ४६७ ॥ १.५.१.१

२. स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ ४६८॥ १.५.१.२

३. वृषा पवस्व धारया मरुत्वते च मत्सरः ।
विश्वा दधान ओजसा ॥ ४६९ ॥ १.५.१.३

४. यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।
देवावीरघशꣳसहा ॥ ४७० ॥ १.५.१.४

५. तिस्रो । वाच उदीरते गावो मिमन्ति धेनवः ।
हरिरेति कनिक्रदत् ॥ ४७१ ॥ १.५.१.५

६. इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
अर्कस्य योनिमासदम् ॥ ४७२ ॥ १.५.१.६

७. असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
श्येनो न योनिमासदत् ॥ ४७३ ॥ १.५.१.७

८. पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
मरुद्भ्यो वायवे मदः ॥ ४७४ ॥ १.५.१.८

९. परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
मदेषु सर्वधा असि ॥ ४७५ ॥ १.५.१.९

१०. परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः ।
स्वानैर्याति कविक्रतु ॥ ४७६ ॥ १.५.१.१०

इति नवमी दशतिः ॥ ९ ॥ प्रथमः खण्डः ॥ १ ॥

[स्व० ६ । उ० ३ | धा० ४२ | गा ॥]

दशतिः (१०)

(१-१०) १ (कविर्मेधावी) श्यावाश्व आत्रेयः; २ त्रित आप्त्यः; ३, ८ अमहीयुराङ्गिरसः; ४ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ५, ६ कश्यपो मारीचः; ७ निध्रुविः काश्यपः ९, १० असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

१. प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
सुता विदथे अक्रमुः ॥ ४७७ ॥ १.५.२.१

२. प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
वनानि महिषा इव ॥ ४७८॥ १.५.२.२

३. पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने ।
विश्वा अप द्विषो जहि ॥ ४७९ ॥ १.५.२.३

२ ३   १ २  ३ १ २  ३ १ २
४. वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।
१ २        ३ १ २
पवमान स्वर्दृशम् ॥ ४८० ॥ १.५.२.४

१  २      ३  १ २   ३  १   २ ३ २  ३  २
५. इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः ।
३ १ २र   ३ १ २
सृजदश्वꣳरथीरिव ॥ ४८१ ॥ १.५.२.५

१ २  ३  २   ३  १ २  ३   १     २र      ३ २
६. असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
३  १ २    ३  १  २र
शुक्रासो वीरयाशवः ॥ ४८२ ॥ १.५.२.६

१ २    ३ १    २ ३ १  २र         ३   १ २
७. पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
३ १    २र ३  १ २
वायुमा रोह धर्मणा ॥ ४८३ ॥ १.५.२.७

१ २                ३ २ ३ १    २र  ३ २
८. पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
१ २      ३२  ३ २
ज्योतिर्वैश्वानरं बृहत् ॥ ४८४ ॥ १.५.२.८

१ २    ३  २ ३   १  २ ३   १ २    ३ १  २   ३ २
९. परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
१ २      ३   १२
मधो अर्षन्ति धारया ॥ ४८५ ॥ १.५.२.९

२ ३   १ २      ३  १    २र ३  १  २र   ३ २
१०. परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः ।
३ १   २र    ३   १ २
कारुं बिभ्रत्पुरुस्पृहम् ॥ ४८६ ॥ १.५.२.१०

इति दशमी दशतिः ॥ १० ॥ द्वितीयः खण्डः ॥ २ ॥

[स्व॰ ११ । उ॰ ना | धा॰ ४९ | हॊ ॥]

इति पञ्चमप्रपाठकस्य द्वितीयोऽर्धः, पञ्चमः प्रपाठकश्च समाप्तः ॥

अथ षष्ठप्रपाठकस्य प्रथमोऽर्धः ॥ ६-१ ॥

दशतिः (१)

(१-१०) १, ८, ९ अमहीयुरांगिरसः; २ बृहन्मतिराङ्गिरसः; ३ जमदग्निर्भार्गवः; ४ प्रभूवसुरांगिरसः; ५ मेध्यातिथिः काण्वः; ६, ७ निध्रुविः काश्यपः; १० उचथ्य आंगिरसः ॥ पवमानः सोमः ॥ गायत्री ॥

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
१. उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
१ २ ३ १ १
इन्दुं देवा अयासिषु ॥ ४८७ ॥ १.५.३.१

३ १ २ ३ २उ ३ २ ३ १ २
२. पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
३ २ ३ १ २ ३ १ २
शुम्भन्ति विप्रं धीतिभिः ॥ ४८८॥ १.५.३.२

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २र
३. आविशन्कलशꣳ सुतो विश्वा अर्षन्नभि श्रियः ।
२ ३ १ २
इन्दुरिन्द्राय धीयते ॥ ४८९ ॥ १.५.३.३

१ २ ३ २ ३ १ २ ३ १ २ ३क २र ३ २
४. असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।
१ २ ३ १ २
कार्ष्मन्वाजी न्यक्रमीत् ॥ ४९० ॥ १.५.३.४

२उ ३ १ २र ३ १ ३ २ ३ १ २
५. प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।
१ २ ३ २उ ३ १ २
घ्नन्तः कृष्णामप त्वचम् ॥ ४९१ ॥ १.५.३.५

३ १ २ ३ १ २ ३ १ २ ३ २
६. अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।
३ १ २र ३ १ २
नुदस्वादेवयुं जनम् ॥ ४९२ ॥ १.५.३.६

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
७. अया पवस्व धारया यया सूर्यमरोचयः ।
३ १ २र ३ २
हिन्वानो मानुषीरपः ॥ ४९३ ॥ १.५.३.७

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
८. स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।
३ १ २ ३ २ ३ २
वव्रिवाꣳसं महीरपः ॥ ४९४ ॥ १.५.३.८

९. अया वीती परि स्रव यस्त इन्दो मदेष्वा ।
अवाहन्नवतीर्नव ॥ ४९५ ॥ १.५.३.९

१०. परि द्युक्ष२ सनद्रयिं भरद्वाजं नो अन्धसा ।
स्वानो अर्ष पवित्र आ ॥ ४९६ ॥ १.५.३.१०

इति प्रथमा दशतिः ॥ १ ॥ तृतीयः खण्डः ॥ ३ ॥

[स्व॰ ९ । उ॰ ६ | धा॰ ३५ | तु ॥]

दशतिः (२)

(१-१४) १ मेधातिथिः काण्वः; २, ७ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ३ उचथ्य आङ्गिरसः; ४ अवत्सारः काशपः; ५ निध्रुविः काश्यपः; ६, १० असितः काश्यपो देवलो वा; ८, ९ कश्यपो मारीचः; ११ कविर्भार्गवः; १२ जमदग्निर्भार्गवः; १३ अयास्य आंगिरसः; १४ अमहीयुरांगिरसः ॥ पवमानः सोमः ॥ गायत्री ॥

१. अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
स२सूर्येण दिद्युते ॥ ४९७ ॥ १.५.४.१

२. आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।
पान्तमा पुरुस्पृहम् ॥ ४९८॥ १.५.४.२

३. अध्वर्यो अद्रिभिः सुत२ सोमं पवित्र आ नय ।
पुनीहीन्द्राय पातवे ॥ ४९९ ॥ १.५.४.३

४. तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मन्दी धावति ॥ ५०० ॥ १.५.४.४

५. आ पवस्व सहस्रिण२ रयि२ सोम सुवीर्यम् ।
अस्मे श्रवा२सि धारय ॥ ५०१ ॥ १.५.४.५

६. अनु प्रत्नास आयवः पदं नवीयो अक्रमुः ।
रुचे जनन्त सूर्यम् ॥ ५०२ ॥ १.५.४.६

७. अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् ।
सीदन्योनौ वनेष्वा ॥ ५०३ ॥ १.५.४.७

८. वृषा सोम द्युमा२ असि वृषा देव वृषव्रतः ।
वृषा धर्माणि दध्रिषे ॥ ५०४ ॥ १.५.४.८

९. इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
इन्दो रुचाभि गा इहि ॥ ५०५ ॥ १.५.४.९

१०. मन्द्रया सोम धारया वृषा पवस्व देवयुः ।
अव्या वारेभिरस्मयुः ॥ ५०६ ॥ १.५.४.१०

११. अया सोम सुकृत्यपा महान्त्सन्नभ्यवर्धथाः ।
मन्दान इद्वृषायसे ॥ ५०७ ॥ १.५.४.११

१२. अयं विचर्षणिर्हितः पवमानः स चेतति ।
हिन्वान आप्यं बृहत् ॥ ५०८॥ १.५.४.१२

१३. प्र न इन्दो महे तु न ऊर्मिं न बिभ्रदर्षसि ।
अभि देवा२ अयास्यः ॥ ५०९ ॥ १.५.४.१३

१४. अपघ्नन्पवते मृधोऽप सोमो अराव्णः ।
गच्छन्निन्द्रस्य निष्कृतम् ॥ ५१० ॥ १.५.४.१४

इति द्वितीया दशतिः ॥ २ ॥ चतुर्थः खण्डः ॥ ४ ॥

[स्व॰ १५ । उ॰ २ | धा॰ ५७ | फो ॥]

इति गायत्र्यः ॥

## दशतिः (३)

(१-१२) सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः; २ कश्यपो मारीचः : ३ गोतमो राहूगणः; ४ अत्रिर्भौमः; ५ विश्वामित्रो गाथिनः; ६ जमदग्निर्भार्गवः; ७ वसिष्ठो मैत्रावरुणिः) ॥ पवमानः सोमः ॥ बृहती ॥

१. पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ ५११ ॥ १.५.५.१

२. परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वाꣳ यो नर्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः ॥ ५१२॥ १.५.५.२

३. आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ ५१३ ॥ १.५.५.३

४. प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अꣳशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ५१४ ॥ १.५.५.४

५. सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ५१५ ॥ १.५.५.५

६. तवाहꣳ सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधीꣳरति ताꣳइहि ॥ ५१६ ॥ १.५.५.६

७. मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ५१७ ॥ १.५.५.७

८. अभि सोमास आयवः पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥ ५१८ ॥ १.५.५.८

९. पुनानः सोम जागृविरव्या वारैः परि प्रियः ।
त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥ ५१९ ॥ १.५.५.९

१०. इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।
सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः ॥ ५२० ॥ १.५.५.१०

११. पवस्व वाजसातमोऽभि विश्वानि वार्या ।
त्वꣳ समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः । ॥ ५२१ ॥ १.५.५.११

१२. पवमाना असृक्षत पवित्रमति धारया ।
मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयाꣳसि च ॥ ५२२॥ १.५.५.१२

इति तृतीया दशतिः ॥ ३ ॥ पञ्चमः खण्डः ॥ ५ ॥

[स्व॰ १९ । उ॰ ३ | धा॰ ९१| द ॥]

इति बृहत्यः ॥

दशतिः (४)

(१-१०) १, ९ उशनाकाव्यः; २ वृषगणो वासिष्ठः; ३, ७ पराशरः शाक्त्यः; ४, ६ वसिष्ठो मैत्रावरुणिः; ५, १० प्रतर्दनो देवोदासिः; ८प्रस्कण्वः काण्वः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

१. प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ ५२३ ॥ १.५.६.१

२. प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ ५२४ ॥ १.५.६.२

३. तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ५२५ ॥ १.५.६.३

४. अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमन्ति होता ॥ ५२६ ॥ १.५.६.४

५. सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ५२७ ॥ १.५.६.५

६. अभि त्रिपृष्ठं वृषणं वयोधामाङ्गोषिणमवावशन्त वाणी ।
वना वसानो वरुणो न । सिन्धूर्वि रत्नधा दयते वार्याणि ॥ ५२८ ॥ १.५.६.६

७. अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन् प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ ५२९ ॥ १.५.६.७

८. कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः ।
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥ ५३० ॥ १.५.६.८

९. एष स्य ते मधुमा॰ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः ।
सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ५३१ ॥ १.५.६.९

१०. पवस्व सोम मधुमा॰ ऋतावापो वसानो अधि सानो अव्ये ।
अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः ॥ ५३२ ॥ १.५.६.१०

इति चतुर्थी दशतिः ॥ ४ ॥ षष्ठः खण्डः ॥ ६ ॥

[स्व० १८ । उ० ३ | धा० ८७| डे ॥]

## दशतिः (५)

(१-१२) १ प्रतर्दनो दैवोदासिः; २, १० पराशरः शाक्त्यः; ३ इन्द्रप्रमतिर्वासिष्ठः; ४ वसिष्ठो मैत्रावरुणिः; ५ कर्णश्रुद्वासिष्ठः; ६ नोधा गौतमः; ७ कण्वो घौरः; ८ मन्युर्वासिष्ठः; ९ कुत्स आङ्गिरसः; ११ कश्यपो मारीचः; १२ प्रस्कण्वः काण्वः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

१. प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना ।
भद्रान् कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥ ५३३ ॥ १.५.७.१

२. प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम् ।
पवमान पवसे धाम गोनां जनयन्त्सूर्यमपिन्वो अर्कैः ॥ ५३४ ॥ १.५.७.२

३. प्र गायताभ्यर्चाम देवान्त्सोमꣳहिनोत महते धनाय ।
स्वादुः पवतामति वारमव्यमा सीदतु कलशं देव इन्दुः ॥ ५३५ ॥ १.५.७.३

४. प्र हिन्वानो जनिता रोदस्यो रथो न वाजꣳ सनिषन्नयासीत् ।
इन्द्रं गच्छन्नायुधा सꣳशिशानो विश्वा वसु हस्तयोरादधानः ॥ ५३६ ॥ १.५.७.४

५. तक्षद्यदी मनसो वेनतो वाग्ज्येष्ठस्य धर्मं द्युक्षोरनीके ।
आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५३७ ॥ १.५.७.५

६. साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ५३८ ॥ १.५.७.६

७. अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते धियः सूरे न विशः ।
अपो वृणानः पवते कवीयन्व्रजं न पशुवर्धनाय मन्म ॥ ५३९ ॥ १.५.७.७

८. इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ५४० ॥ १.५.७.८

९. अया पवा पवस्वैना वसूनि मा॑श्चत्व इन्द्रो सरसि प्र धन्व ।
ब्रघ्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ५४१ ॥ १.५.७.९

१०. महत्तत्सोमो महिषश्चकारापां यद्गर्भोवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोजनयत्सूर्ये ज्योतिरिन्दुः । ॥ ५४२ ॥ १.५.७.१०

११. असर्जि वक्का रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा ।
दश स्वसारो अधि सानो अव्ये मृजन्ति वह्नि॑सदनेष्वच्छ ॥ ५४३ ॥ १.५.७.११

१२. अपामिवेदूर्मयस्तर्त्तुराणाः प्र मनीषा ईरते सोममच्छ ।
नमस्यन्तीरुप च यन्ति सं चाच विशन्त्युशतीरुशन्तम् ॥ ५४४ ॥ १.५.७.१२

इति पञ्चमी दशतिः ॥ ५ ॥ सप्तमः खण्डः ॥ ७ ॥

[स्व॰ १९ । उ॰ ३ | धा॰ ८२| दा ॥]

इति त्रिष्टुभः ॥

इति षष्टप्रपाठकस्य प्रथमोऽर्धः ॥

अथ षष्टप्रपाठकस्य द्वितीयोऽर्धः ॥ ६-२ ॥

दशतिः (६)

(१-९) १ अन्भीगुः श्यावाश्विः; २ नहुषो मानवः; ३ ययातिर्नाहुषः; ४ मनु सांवरणः;५, ८ अम्बरीषो वार्षागिरः ऋजिष्वा भारद्वाजश्च; ६, ७ रेभसूनू काश्यपौ; ९ प्रजापतिर्वैश्वामित्रो वाच्यो वा ॥ पवमानः सोमः ॥ अनुष्टुप्; ७ बृहती ॥

१. पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वान॑श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ ५४५ ॥ १.५.८.१

२. अयं पूषा रयिउभगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ५४६ ॥ १.५.८.२

३. सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥ ५४७ ॥ १.५.८.३

४. सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ५४८ ॥ १.५.८.४

५. अभी नो वाजसातमꣳ रयिमर्ष शतस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५४९ ॥ १.५.८.५

६. अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातꣳरिहन्ति मातरः ॥ ५५० ॥ १.५.८.६

७. आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौꣳस्यम् ।
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥ ५५१ ॥ १.५.८.७

८. परि त्यꣳहर्यतꣳहरिं बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाꣳइत्परि मदेन सह गच्छति ॥ ५५२ ॥ १.५.८.८

९. प्र सुन्वानास्यान्धसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसꣳहता मखं न भृगवः ॥ ५५३ ॥ १.५.८.९

इति षष्ठी दशतिः ॥ ६ ॥ अष्टमः खण्डः ॥ ८ ॥

[स्व° १० । उ° ५ | धा° ६१| म ॥]

॥ इत्यनुष्टुभः (एका बृहती) ॥

(१-१२) १-३, ५ कविर्भार्गवः; ४, ६ सिकता निवावरी ७ रेणुर्वैश्वामित्रः; ८ वेनो भार्गवः; ९ वसुर्भारद्वाजः; १० वत्सप्रिर्भालन्दः; ११ गृत्समदः शौनकः; १२ पवित्र आङ्गिरसः ॥ पवमानः सोमः ॥ जगती ॥

१. अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ ५५४ ॥ १.५.९.१

२. अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः ।
वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः ॥ ५५५॥ १.५.९.२

३. एष प्र कोशे मधुमाꣳ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः ।
अभ्यृ३तस्य सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसा च धेनवः ॥ ५५६॥ १.५.९.३

४. प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतꣳसखा सख्युर्न प्र मिनाति सङ्गिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ५५७ ॥ १.५.९.४

५. धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाꣳसि कृणुषे नदीष्वा ॥ ५५८ ॥ १.५.९.५

६. वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसांꣳदिवः ।
प्राणा सिन्धूनाꣳकलशाꣳ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ५५९ ॥ १.५.९.६

७. त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत॥ ५६० ॥ १.५.९.७

८. इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह ।
मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ॥ ५६१ ॥ १.५.९.८

९. असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अभिक्रदत् ।
पुनानो वारमत्येष्यव्ययꣳश्येनो न योनिं घृतवन्तमासदत् ॥ ५६२ ॥ १.५.९.९

१०. प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः ।
बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥ ५६३ ॥ १.५.९.१०

११. अञ्जते व्यञ्जते समञ्जते क्रतुꣳ रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुऽ१च्छ्वासे पतयन्तमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ५६४ ॥ १.५.९.११

१२. पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तः सं तदाशत ॥ ५६५ ॥ १.५.९.१२

इति सप्तमी दशतिः ॥ ७ ॥ नवमः खण्डः ॥ ९ ॥

[स्व० १५ । उ० ११ | धा० १३७| पे ॥]

इति जगत्यः ॥

दशतिः (८)

(१-१२) १, ७, ११ अग्निश्चाक्षुषः; २ चक्षुर्मानवः; ३, ४, ९, १० पर्वतनारदौ काण्वौ; (३,१० शिखण्डिन्यावाप्सरसौ काश्यपौ वा) ५ त्रित आप्त्यः; ६ मनुराप्सवः; ८, १२ द्वित आप्त्यः ॥ पवमानः सोमः ॥ उष्णिक् ॥

१. इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
श्रुष्टे जातास इन्दवः स्वर्विदः ॥ ५६६ ॥ १.५.१०.१

२. प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव ।
द्युमन्तꣳ शुष्ममा भर स्वर्विदम् ॥ ५६७॥ १.५.१०.२

३. सखाय आ नि षीदत पुनानाय प्र गायत ।
शिशुं न यज्ञैः परि भूषत श्रिये ॥ ५६८॥ १.५.१०.३

४. तं वः सखायो मदाय पुनानमभि गायत ।
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः । ॥ ५६९ ॥ १.५.१०.४

५. प्राणा शिशुर्महीना॰ हिन्वन्नृतस्य दीधितिम् ।
विश्वा परि प्रिया भुवदध द्विता ॥ ५७० ॥ १.५.१०.५

६. पवस्व देववीतय इन्दो धाराभिरोजसा ।
आ कलशं मधुमान्त्सोम नः सदः । ॥ ५७१ ॥ १.५.१०.६

७. सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
अग्रे वाचः पवमानः कनिक्रदत् ॥ ५७२ ॥ १.५.१०.७

८. प्र पुनानाय वेधसे सोमाय वच उच्यते ।
भृतिं न भरा मतिभिर्जुजोषते ॥ ५७३ ॥ १.५.१०.८

९. गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ ५७४ ॥ १.५.१०.९

१०. अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत ।
गोभिष्टे वर्णमभि वासयामसि ॥ ५७५ ॥ १.५.१०.१०

११. पवते हर्यतो हरिरति ह्वरा॰सि र॰ह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ५७६ ॥ १.५.१०.११

१२. परि कोशं मधुश्चुत॰ सोमः पुनानो अर्षति ।
अभि वाणीर्ऋषीणा॰ सप्ता नूषत ॥ ५७७ ॥ १.५.१०.१२

॥ इत्यष्टमी दशतिः ॥ ८ ॥ दशमः खण्डः ॥ १० ॥

[स्व॰ ८ । उ॰ ३ | धा॰ ४३| ठ ॥]

दशतिः (९)

(१-८) १ गौरवीतिः शाक्त्यः; २ उर्ध्वसद्मा आङ्गिरसः; ३, ८ ऋजिश्वा भारद्वाजः; ४ कृतयशा आंगिरसः; ५ ऋणंचयो राजर्षिः; ६ शक्तिर्वासिष्ठः; ७ ऊरुरांगिरसः ॥ पवमानः सोमः ॥ ककुप्, ५ यवमध्या गायत्री ॥

१. पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥ ५७८ ॥ १.५.११.१

२. अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
वि कोशं मध्यमं युव ॥ ५७९॥ १.५.११.२

३. आ सोता परि षिञ्चताश्वं न स्तोममप्तुरꣳरजस्तुरम् ।
वनप्रक्षमुदप्रुतम् ॥ ५८०॥ १.५.११.३

४. एतमु त्यं मदच्युतꣳ सहस्रधारं वृषभं दिवोदुहम् ।
विश्वा वसूनि बिभ्रतम् ॥ ५८१ ॥ १.५.११.४

५. स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
सोमो यः सुक्षितीनाम् ॥ ५८२ ॥ १.५.११.५

६. त्व ह्या३ङ्ग दैव्य पवमान जनिमानि द्युमत्तमः ।
अमृतत्वाय घोषयन् ॥ ५८३ ॥ १.५.११.६

७. एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिन्तमः ।
क्रीडन्नूर्मिरपामिव ॥ ५८४ ॥ १.५.११.७

८. य उस्त्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा ।
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ।
ओ३म् वर्मीव धृष्णवा रुज ॥ ५८५ ॥ १.५.११.८

इति नवमी दशतिः ॥ ९ ॥ एकदशः खण्डः ॥ ११ ॥

[स्व॰ ७ । उ॰ १ | धा॰ ४३| चि ॥]

॥ इत्युष्णिक् ककुभः ॥
इति षष्ठप्रपाठकस्य द्वितीयोऽर्धः षष्ठप्रपाठकश्च समाप्तः ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

इति छन्दोगप्रकृतिऋक् समाप्ता ॥

इति सौम्यं पावमानं काण्डं पर्व वा समाप्तम् ॥

इति पूर्वार्चिकः (छन्द आर्चिक:) समाप्तः ॥

पावमानकाण्डस्य मन्त्रसंख्या ११९

| | तत्र | |
|---|---|---|
| गायत्र्यः | ४६७-५१० | (४४) |
| बृहत्यः | ५११-५२२ | (१२) |
| त्रिष्टुभः | ५२३-५४४ | (२२) |
| अनुष्टुभः | ५४५-५५३ | (९) |
| जगत्यः | ५५४-५६५ | (१२) |
| उष्णिक्ककुभः | ५६६-५८५ | (२०) |
| | | ११९ |

[तत्र 'आहर्यत' इति ५५१ बृहती]

# आर्ण्यार्चिकः ॥

# अथ आर्ण्यं काण्डम् ॥

## अथ षष्ठोऽध्यायः ॥



दशतिः (१)

(१-९) १ शंयुर्बार्हस्पत्यः (भरद्वाजः); २ वसिष्ठो मैत्रावरुणिः; ३, ६ वामदेवो गौतमः; ४ शुनःशेप आजीगर्तिः कृत्रिमो देवरातो वैश्वामित्रो वा; ५ कुत्स आंगिरसः (गृत्समदः); ७, ८ अमहीयुरांगिरसः; ९ आत्मा ॥ इन्द्रः; ४ वरुणः; ५, ७, ८ पवमानः सोमः; ६ विश्वे देवाः; ९ अन्नम् ॥ बृहती; २, ४, ५, ९ त्रिष्टुप्; ३, ७-८ गायत्री; ६ एकपाज्जगती ॥

१. इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पुपुरि श्रवः ।
यद्दिधृक्षेम वज्रहस्त रोदसी उभे सुशिप्र पप्राः ॥ ५८६ ॥ १.६.१.१

२. इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूपं यदस्य ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् ॥ ५८७॥ १.६.१.२

३. यस्येदमा रजोयुजस्तुजे जने वनꣳस्वः ।
इन्द्रस्य रन्त्यं बृहत् ॥ ५८८ ॥ १.६.१.३

४. उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय ।
अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ ५८९ ॥ १.६.१.४

५. त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५९० ॥ १.६.१.५

६. इमं वृषणं कृणुतैमिन्माम् । ॥ ५९१ ॥ १.६.१.६

७. स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
वरिवोवित्परिस्रव ॥ ५९२ ॥ १.६.१.७

८. एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
सिषासन्तो वनामहे ॥ ५९३ ॥ १.६.१.८

९. अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम ।
यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि ॥ ५९४ ॥ १.६.१.९

इति प्रथमा दशतिः ॥ १ ॥ प्रथमः खण्डः ॥ १ ॥

दशतिः (२)

(१-७) १ श्रुतकक्ष आङ्गिरसः; २ पवित्र आङ्गिरसः; ३, ४ मधुच्छन्दा वैश्वामित्रः; ५ प्रथो वासिष्ठः; ६ गृत्समदः शौनकः; ६ नृमेधपुरुमेधावांगिरसौ ॥ इन्द्रः; २ पवमानः सोमः; ५ विश्वे देवाः; ६ वायुः ॥ गायत्री, २ जगती, ५ त्रिष्टुप्, ७ अनुष्टुप् ॥

१. त्वमेतदधारयः कृष्णासु रोहिणीषु च ।
परुष्णीषु रुशत्पयः ॥ ५९५ ॥ १.६.२.१

२. अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ ५९६ ॥ १.६.२.२

३. इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
इन्द्रो वज्री हिरण्ययः ॥ ५९७ ॥ १.६.२.३

४. इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ॥ ५९८ ॥ १.६.२.४

५. प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ ५९९ ॥ १.६.२.५

६. नियुत्वान्वायवा गह्ययꣳ शुक्रो अयामि ते ।
गन्तासि सुन्वतो गृहम् ॥ ६०० ॥ १.६.२.६

७. यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ ६०१ ॥ १.६.२.७

इति द्वितीया दशतिः ॥ २ ॥ द्वितीयः खण्डः ॥ २ ॥

दशतिः (३)

(१-१३) १, ५, ७, १० वामदेवो गौतमः; २, ३ गोतमो राहूगणः; ४ मधुच्छन्दा वैश्वामित्रः; ६ गृत्समदः शौनकः; ८ भरद्वाजो बार्हस्पत्यः; ९ ऋजिश्वा भारद्वाजः; ११ हिरण्यस्तूप आंगिरसः; १२, १३ विश्वामित्रो गाथिनः (१२ ब्रह्मा) ॥ १ प्रजापतिः; २, ३ सोमः; ४, ५, ८, १३ अग्निः; ६ अपांनपात्; ७ रात्रिः; ९ विश्वेदेवाः; १० लिंगोक्ता; ११ इन्द्रः; १२ आत्मा अग्निर्वा ॥ त्रिष्टुप्; १, ७ अनुष्टुप्, ४ गायत्री; ८, ९ जगती; १० महापंक्तिः ॥

१. मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः ।
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृꣳहतु ॥ ६०२ ॥ १.६.३.१

२. सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवा स्युत्तमानि धिष्व । ॥ ६०३ ॥ १.६.३.२

३. त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ६०४ ॥ १.६.३.३

४. अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होततर॰ रत्नधातमम् ॥ ६०५ ॥ १.६.३.४

५. ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जनान् ।
ता जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥ ६०६ ॥ १.६.३.५

६. समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति ।
तमू शुचि॰ शुचयो दीदिवा॰समपान्नपातमुप यन्त्यापः ॥ ६०७ ॥ १.६.३.६

७. आ प्रागाद्भद्रा युवतिरह्नः केतूंत्समीर्त्सति ।
अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री ॥ ६०८ ॥ १.६.३.७

८. प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे ।
वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ ६०९ ॥ १.६.३.८

९. विश्वे देवा मम श्रृण्वन्तु यज्ञमुभे रोदसी अपां नपाच्च मन्म ।
मा वो वचा॰सि परिचक्ष्याणि वोच॰ सुम्नेष्विद्वो अन्तमा मदेम ॥ ६१० ॥ १.६.३.९

१०. यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती ।
यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् ।
यशस्व्या३स्याः स॰ सदोऽहं प्रवदिता स्याम् ॥ ६११ ॥ १.६.३.१०

११. इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ ६१२ ॥ १.६.३.११

१२. अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
त्रिधातुरर्को रजसो विमानोजस्रं ज्योतिर्हविरस्मि सर्वम् ॥ ६१३ ॥ १.६.३.१२

१३. पात्यग्निर्विपो अग्रं पदं वे पाति यह्वश्चरण॰ सूर्यस्य ।
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ ६१४ ॥ १.६.३.१३

इति तृतीया दशतिः ॥ ३ ॥ तृतीयः खण्डः ॥ ३ ॥



## दशतिः (४)

(१-१२) वामदेवो गौतमः; ३-७ नारायणः ॥ १-२ अग्निः; ३-७ पुरुषः; ८ द्यावापृथिवी; ९-११ इन्द्रः; १२ गावः ॥ अनुष्टुप्; १-२ पंक्तिः; ८, ११, १२ त्रिष्टुप् ॥

१. भ्राजन्त्यग्ने समिधान दीदिवो जिह्वा चरत्यन्तरासनि ।
स त्वं नो अग्ने पयसा वसुविद्रयिं वर्चो दृशेऽदाः ॥ ६१६ ॥ १.६.४.१

२. वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः ।
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः । ॥ ६१६ ॥ १.६.४.२

३. सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमि॰ सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ६१७ ॥ १.६.४.३

४. त्रिपादूर्ध्व उदैत्पुरुषः पदोऽस्येहाभवत्पुनः ।
तथा विष्वङ् व्यक्रामदशनानशने अभि ॥ ६१८ ॥ १.६.४.४

५. पुरुष एवेद॰ सर्वं यद्भूतं यच्च भाव्यम् ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ६१९ ॥ १.६.४.५

६. तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६२० ॥ १.६.४.६

७. ततो विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ६२१ ॥ १.६.४.७

८. मन्ये वां द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम् ।
द्यावापृथिवी भवतꣳ स्योने ते नो मुञ्चतमꣳहसः ॥ ६२२ ॥ १.६.४.८

९. हरी त इन्द्र श्मश्रूण्युतो ते हरितौ हरी ।
तं त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः ॥ ६२३ ॥ १.६.४.९

१०. यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत ।
सत्यस्य ब्रह्मणो वर्चस्तेन मा सꣳ सृजामसि ॥ ६२४ ॥ १.६.४.१०

११. सहस्तन्न इन्द्र दद्ध्योज ईशे ह्यस्य महतो विरप्शिन् ।
क्रतुं न नृम्णꣳ स्थविरं च वाजं वृत्रेषु शत्रून्त्सुहना कृधी नः ॥ ६२५ ॥ १.६.४.११

१२. सहर्षभाः सहवत्सा उदेत विश्वा रूपाणि बिभ्रतीर्द्व्यूध्नी ।
उरुः पृथुरयं वो अस्तु लोक इमा आपः सुप्रपाणा इह स्त ॥ ६२६ ॥ १.६.४.१२

इति चतुर्थी दशतिः ॥ ४ ॥ चतुर्थः खण्डः ॥ ४ ॥

दशतिः (५)

(१-१४) १ शतं वैखानसाः; २ विभ्राट् सौर्यः; ३ कुत्स आङ्गिरसः; ४-६ सार्पराज्ञी; ७-१४ प्रस्कण्वः काण्वः ॥ सूर्यः; १ अग्निः पवमानः; ४-६ आत्मा वा ॥ गायत्री; २ जगती; ३ त्रिष्टुप् ॥

१. अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥ ६२७ ॥ १.६.५.१

२. विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति ॥ ६२८ ॥ १.६.५.२

३. चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरीक्ष१ सूर्य आत्मा जगतस्तस्थुषश्च ॥ ६२९ ॥ १.६.५.३

४. आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः ॥ ६३० ॥ १.६.५.४

५. अन्तश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवम् ॥ ६३१ ॥ १.६.५.५

६. त्रि१शद्धाम वि राजति वाक्पतङ्गाय धीयते ।
प्रति वस्तोरह द्युभिः ॥ ६३२ ॥ १.६.५.६

७. अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥ ६३३ ॥ १.६.५.७

८. अदृश्रन्नस्य केतवो वि रश्मयो जना१अनु ।
भ्राजन्तो अग्नयो यथा ॥ ६३४ ॥ १.६.५.८

९. तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमाभासि रोचनम् ॥ ६३५ ॥ १.६.५.९

१०. प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्व१ स्वर्दृशे ॥ ६३६ ॥ १.६.५.१०

११. येना पावक चक्षसा भुरण्यन्तं जना१अनु ।
त्वं वरुण पश्यसि । ॥ ६३७ ॥ १.६.५.११

१२. उद्द्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः ।
पश्यञ्जन्मानि सूर्य ॥ ६३८ ॥ १.६.५.१२

१३. अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्र्यः ।
ताभिर्याति स्वयुक्तिभिः ॥ ६३९ ॥ १.६.५.१३

१४. सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षण ॥ ६४० ॥ १.६.५.१४

इति पञ्चमी दशतिः ॥ ५ ॥ पञ्चमः खण्डः ॥ ५ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

इति सामवेद-संहितायामारण्यं काण्डं पर्व वा समाप्तम् ॥

# अथ महानाम्न्यार्चिकः ॥

(१-१०) प्रजापतिः ॥ इन्द्रस्त्रैलोक्यात्मा ॥ त्रिकं = [१ प्रथमं द्विपदा + (२) ततस्त्रयः शाक्कराः पादाः + (३) तत उपसर्गौ + (३) उभयं (शाक्करोपसर्गौ) + (५) ततः शाक्करास्त्रयः पादाः + (६) उपसर्गः ]

१. विदा मघवन् विदा गातुमनुश॰सिषो दिशः ।
शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ ६४१ ॥ १.६.६.१

२. आभिष्ट्वमभिष्टिभिः स्वाऽ३र्न्नां॰शुः ।
प्रचेतन प्रचेतयेन्द्र द्युम्नाय न इषे ॥ ६४२ ॥ १.६.६.२

३. एवा हि शक्रो राये वाजाय वज्रिवः ।
शविष्ठ वज्रिन्नृञ्जसे म॰हिष्ठ वज्रिन्नृञ्जस ।
आ याहि पिब मत्स्व ॥ ६४३ ॥ १.६.६.३

४. विदा राये सुवीर्यं भुवो वाजानां पतिर्वशा॰ अनु ।
म॰हिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ६४४ ॥ १.६.६.४

५. यो म॰हिष्ठो मघोनाम॰शुर्न्न शोचिः ।
चिकित्वो अभि नो नयेन्द्रो विदे तमु स्तुहि ॥ ६४५ ॥ १.६.६.५

६. ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६४६ ॥ १.६.६.६

७. इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः स नः स्वर्षदति द्विषः ॥ ६४७ ॥ १.६.६.७

८. पूर्वस्य यत्ते अद्रिवो३ऽशुर्मदाय ।
सुम्नं आ धेहि नो वसो पूर्तिः शविष्ठ शस्यते ।
वशी हि शक्रो नूनं तन्नव्य३ संन्यसे ॥ ६४८ ॥ १.६.६.८

९. प्रभो जनस्य वृत्रहन् त्समर्येषु ब्रवावहै ।
शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥ ६४९ ॥ १.६.६.९

अथ पञ्च पुरीषपदानि ॥

१०. एवाह्येऽ३ऽ३ऽ३व । एवा ह्यग्ने | एवाहीन्द्र ।
एवा हि पूषन् । एवा हि देवाः । ॐ एवाहि देवाः ॥ ६५० ॥ १.६.६.१०

इति पञ्च पुरीषपदानि ॥

इति महानाम्न्यार्चिका समाप्तः ॥

इति सामवेदसंहितायां पूर्वार्चिकः समाप्तः ॥

पूर्वार्चिकस्य मन्त्रसंख्या

| | | | |
|---|---|---|---|
| १ | आग्नेयस्य काण्डस्य | (१-११४) | ११४ |
| २ | ऐन्द्रस्य काण्डस्य | (११५-४६६) | ३५२ |
| ३ | पावमानस्य काण्डस्य | (४६७-५८५) | ११९ |
| ४ | आरण्यकस्य काण्डस्य | (५८६-६४०) | ५५ |
| ५ | महानाम्न्यार्चिअस्य | (६४१-६५० | १० |
| | | सर्वयोगः | ६५० |

# सामवेद संहिता

## उत्तरसंहिता (उत्तरार्चिकः)

### अथ प्रथमोऽध्यायः ॥

अथ प्रथमप्रपाठके प्रथमोऽर्धः ॥ १-१ ॥

(१-२३) १ असितः काश्यपो देवलो वा; २ कश्यपो मारीचः; ३ शतं वैखानसः; ४, २१ भरद्वजो बार्हस्पत्यः; ५, ७ विश्वामित्रो गाथिनः; ५ जमदग्निर्वा; ६ इरिम्बिठिः काण्वः; ८ अमहीयुरांगिरसः; ९ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः , ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); १० उशना काव्यः; ११ वसिष्ठो मैत्रावरुणिः; १२ वामदेवो गौतमः; १३ नोधा गौतमः; १४ कलिः प्रागाथः; १५ मदुच्छन्दा वैश्वामित्रः; १६ गौरवीतिः शात्त्यः; १७ अग्निश्चाक्षुषः; १८ अन्धीगुः श्यावाश्विः; १९ कविर्भार्गवः; २० शंयुर्बार्हस्पत्यः; (तृणपाणिः;) २२ सोभरिः काण्वः; २३ नृमेध आंगिरसः ॥ १-३, ८-१०, १५-१९ पवमानः सोमः; ४, २०, २१ अग्निः; ५ मित्रावरुणौ; ७ इन्द्राग्नी; ६, ११-१४, २२-२३ इन्द्रः ॥ १-८, १२ (१-२), १५, १८ २-३), २१ गायत्री; ९, ११, १३, १४, २० प्रगाथः = (विषमा बृहती, समा तो बृहती); १० त्रिष्टुप्; १२ (३) पादनिचृत्; १६, २२ काकुभः प्रगाथः = (विषमा ककुप्, समा सतो बृहती); १७ उष्णिक् ; १८ अनुष्टुप्; १९ जगती; २३ (१) ककुप्, (२) उष्णिक्, (३) पुर उष्णिक् ॥

सूक्तं (१)

१. उपास्मै गायता नरः पवमानायेन्दवे ।
अभि देवाꣳ इयक्षते ॥ ६५१ ॥ २.१.१.१[२]

२. अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः ।
देवं देवाय देवयु ॥ ६५२ ॥ २.१.१.२

[२]अर्चिकसङ्ख्या, अध्यायः, ख़ण्डं, ऋक्

३. स नः पवस्व शं गवे शं जनाय शमर्वते ।
शꣳ राजन्नोषधीभ्यः ॥ ६५३ ॥ ॥ १(ती)॥ २.१.१.३

## सूक्तं (२)

१. दविद्युतत्या रुचा परिष्टोभन्त्या कृपा ।
सोमाः शुक्रा गवाशिरः ॥ ६५४ ॥ २.१.१.४

२. हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् ।
सीदन्तो वनुषो यथा ॥ ६५५ ॥ २.१.१.५

३. ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे ।
पवस्व सूर्यो दृशे ॥ ६५६ ॥ ॥२(यि)॥ २.१.१.६

## सूक्तं (३)

१. पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत ।
अर्वन्तो न श्रवस्यवः ॥ ६५७ ॥ २.१.१.७

२. अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये ।
अवावशन्त धीतयः ॥ ६५८ ॥ २.१.१.८

३. अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः ।
अग्मन्नृतस्य योनिमा ॥ ६५९ ॥ ॥ ३(कौ)॥ २.१.१.९

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (४)

१. अग्न आ याहि वीतये गृणानो हव्यदातये ।
नि होता सत्सि बर्हिषि ॥ ६६० ॥ २.१.२.१

२. तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।
बृहच्छोचा यविष्ठ्य ॥ ६६१ ॥ २.१.२.२

३. स नः पृथु श्रवाय्यमच्छा देव विवाससि ।
बृहदग्ने सुवीर्यम् ॥ ६६२ ॥ ॥१५(ल)॥ २.१.२.३

सूक्तं (५)

१. आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजाꣳसि सुक्रतू ॥ ६६३ ॥ २.१.२.४

२. उरुशꣳसा नमोवृधा मह्ना दक्षस्य राजथः ।
द्राघिष्ठाभिः शुचिव्रता ॥ ६६४ ॥ २.१.२.५

३. गृणाना जमदग्निना योनावृतस्य सीदतम् ।
पातꣳ सोममृतावृधा ६६५ ॥ ॥५ (यि)॥ २.१.२.६

सूक्तं (६)

१. आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् ।
एदं बर्हिः सदो मम ॥ ६६६ ॥ २.१.२.७

२. आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना ।
उप ब्रह्माणि नः शृणु ॥ ६६७ ॥ २.१.२.८

३. ब्रह्माणस्त्वा युजा वय२ सोमपामिन्द्र सोमिनः ।
सुतावन्तो हवामहे ॥ ॥ ६६८ ॥ ॥६(फौ)॥ २.१.२.९

## सूक्तं (७)

१. इन्द्राग्नी आ गत२ सुतं गीर्भिर्नभो वरेण्यम् ।
अस्य पातं धियेषिता ॥ ६६९ ॥ २.१.२.१०

२. इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।
अया पातमिम२ सुतम् ॥ ६७० ॥ २.१.२.११

३. इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।
ता सोमस्येह तृम्प ॥ ६७१ ॥ ॥७(ता)॥ २.१.२.१२

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (८)

१. उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
उग्र२ शर्म महि श्रवः ॥ ६७२ ॥ २.१.३.१

२. स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
वरिवोवित्परि स्रव ॥ ६७३ ॥ २.१.३.२

३. एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
सिषासन्तो वनामहे ॥ ६७४ ॥ ॥८(ठी)॥ २.१.३.३

## सूक्तं (९)

१. पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ ६७५ ॥ २.१.३.४

२. दुहान ऊधर्दिव्यं मधु प्रियं प्रत्न२ं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥ ६७६ ॥ ॥९(लु)॥ २.१.३.५

## सूक्तं (१०)

१. प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ ६७७ ॥ २.१.३.६

२. स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः ।
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥ ६७८ ॥ २.१.३.७

३. ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासामपीच्या३ं गुह्यं नाम गोनाम् ॥ ६७९॥ ॥१०(हु)॥ २.१.३.८

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (११)

१. अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ ६८० ॥ २.१.४.१

२. न त्वावा२ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ६८१ ॥ ॥११(यी)॥ २.१.४.२



सूक्तं (१२)

१. कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ ६८२ ॥ २.१.४.३

२. कस्त्वा सत्यो मदानां म२हिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥ ६८३ ॥ २.१.४.४



३. अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतये ॥ ६८४ ॥ ॥१२(टा) ॥ २.१.४.५

सूक्तं (१३)

१. तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ ६८५ ॥ २.१.४.६

२. द्युक्ष२ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाज२ शतिन२ सहस्रिणं मक्षू गोमन्तमीमहे ॥ ६८६ ॥ ॥१३(ही)॥ २.१.४.७

सूक्तं (१४)

१. तरोभिर्वो विदद्वसुमिन्द्रꣳ सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥६८७ ॥

२. न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ ६८८ ॥ ॥१४(जु)॥ २.१.४.९

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१५)

१. स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ ६८९ ॥ २.१.५.१

२. रक्षोहा विश्वचर्षणिरभि योनिमयोहते ।
द्रोणे सधस्थमासदत् ॥ ६९० ॥ २.१.५.२

३. वरिवोधातमो भुवो मꣳहिष्ठो वृत्रहन्तमः ।
पर्षि राधो मघोनाम् ॥ ६९२ ॥ ॥१५(पौ)॥ २.१.५.३

## सूक्तं (१६)

१. पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥ ६९२ ॥ २.१.५.४

२. यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥ ६९३ ॥ ॥१६(प)॥ २.१.५.५

## सूक्तं (१७)

१. इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
श्रुष्टे जातास इन्दवः स्वर्विदः ॥ ६९४ ॥ २.१.५.६

२. अयं भराय सानसिरिन्द्राय पवते सुतः ।
सोमो जैत्रस्य चेतति यथा विदे ॥ ६९५ ॥ २.१.५.७

३. अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।
वज्रं च वृषणं भरत्समप्सुजित् ॥ ६९६ ॥ ॥१७(कि)॥ २.१.५.८

## सूक्तं (१८)

१. पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानꣳ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ ६९७ ॥ २.१.५.९

२. यो धारया पावकया परिप्रस्यन्दते सुतः ।
इन्दुरश्वो न कृत्व्यः ॥ ६९८ ॥ २.१.५.१०

३. तं दुरोषमभी नरः सोमं विश्वाच्या धिया ।
यज्ञाय सन्त्वद्रयः ॥ ६९९ ॥ ॥१८(यि)॥ २.१.५.११

## सूक्तं (१९)

१. अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ ७०० ॥ २.१.५.१२

२. ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
दधाति पुत्रः पित्रोरपीच्यां३ नाम तृतीयमधि रोचनं दिवः ॥ ७०१ ॥ २.१.५.१३

३. अव द्युतानः कलशाꣳ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये ।
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥ ७०२ ॥ ॥१९(दि)॥ २.१.५.१४

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (२०)

१. यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥ ७०३ ॥ २.१.६.१

२. ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ ७०४ ॥ ॥२०(यु)॥ २.१.६.२

## सूक्तं (२१)

१. एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
एभिर्वर्धास इन्दुभिः ॥ ७०५ ॥ २.१.६.३

२. यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।
तत्र योनिं कृणवसे ॥ ७०६ ॥ २.१.६.४

३. न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते ।
अथा दुवो वनवसे ॥ ७०७ ॥ ॥२१(यी)॥ २.१.६.५

## सूक्तं (२२)

१. वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
वज्रिं चित्रꣳहवामहे ॥ ७०८ ॥ २.१.६.६

२. उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
त्वामिध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥ ७०९ ॥ ॥२२(च)॥ २.१.६.७

## सूक्तं (२३)

१. अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मन्त उदभिः ॥ ७१० ॥ २.१.६.८

२. वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि ।
वावृध्वाꣳसं चिदद्रिवो दिवेदिवे ॥ ७११ ॥ २.१.६.९

३. युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा ।
इन्द्रवाहा स्वर्विदा ॥ ७१२ ॥ ॥२३(यि)॥ २.१.६.१०

इति षष्ठः खण्डः ॥ १ ॥

इति प्रथमप्रपाठके प्रथमोऽर्धः ॥ १ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

# अथ द्वितीयोऽध्यायः ॥

अथ प्रथमप्रपाठके द्वितीयोऽर्धः ॥ १ -२ ॥

(१-२२) १, ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; २, ८, १३-१५ वसिष्ठो मैत्रावरुणिः; ३ मेदातिथिः; काण्वः प्रियमेधश्चाङ्गिरसः; ५ इरिम्बिठिः काण्वः; ६ कुसीदी काण्वः; ७ त्रिशोकः काण्वः; ९ विश्वामित्रो गाथिनः; १० मदुच्छन्दा वैश्वामित्रः; ११ शुनःशेप आजीगर्तिः; १२ नारदः काण्वः; १६ अवत्सारः काश्यपः; १७ (१) शुनःशेप आजीगर्तिः स देवरातः कृत्रिमो वैश्वामित्रः; १७ (२-३) मेधातिथिः काण्वः ; १८ (१, ३) असितः काश्यपो देवलो वा; १८ (२) अमहीयुराङ्गिरसः; १९ त्रित आप्त्यः; २० सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); २१ शावाश्व आत्रेयः; २२ (१-२) अग्निश्चाक्षुषः; २२ (३) प्रजापतिर्वैश्वामित्रो वाच्यो वा ॥ १-१२ इन्द्रः; १३ अग्निः; १४ उषौ; १५ अश्विनौ; १६-२२ पवमानः सोमः ॥ १ (२-३)-११, १६-१९, २१ गायत्री; १२, २२ (१-२) उष्णिक्; १३-१५, २० प्रगाथः = विषमा बृहती, समा सतोबृहती); १ (१), २२ (३) अनुष्टुप् ॥

सूक्तं (१)

१. पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
विश्वासाहꣳ शतक्रतुं मꣳहिष्ठं चर्षणीनाम् ॥ ७१३ ॥ २.२.१.१

२. पुरुहूतं पुरुष्टुतं गाथान्या३ꣳ सनश्रुतम् ।
इन्द्र इति ब्रवीतन ॥ ७१४ ॥ २.२.१.२

३. इन्द्र इन्नो महोनां दाता वाजानां नृतुः ।
महाꣳअभिज्ञ्वा यमत् ॥ ७१५ ॥ ॥१(वा)॥ २.२.१.३

सूक्तं (२)

१. प्र व इन्द्राय मादनꣳ हर्यश्वाय गायत ।
सखायः सोमपाव्ने ॥ ७१६ ॥ २.२.१.४

२. शꣳसेदुक्थꣳ सुदानव उत द्युक्षं यथा नरः ।
चकृमा सत्यराधसे ॥ ७१७ ॥ २.२.१.५

३. त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो ।
त्वꣳहिरण्ययुर्वसो ॥ ७१८ ॥ ॥२(गौ)॥ २.२.१.६

## सूक्तं (३)

१. वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।
कण्वा उक्थेभिर्जरन्ते ॥ ७१९ ॥ २.२.१.७

२. न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ ।
तवेदु स्तोमैश्चिकेत ॥ ७२० ॥ २.२.१.८

३. इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।
यन्ति प्रमादमतन्द्राः ॥ ७२१ ॥ ॥३(पा)॥ २.२.१.९

## सूक्तं (४)

१. इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
अर्कमर्चन्तु कारवः ॥ ७२२ ॥ २.२.१.१०

२. यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त सꣳसदः ।
इन्द्रꣳ सुते हवामहे ॥ ७२३ ॥ २.२.१.११

३. त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।
तमिद्वर्धन्तु नो गिरः ॥ ७२४ ॥ ॥४(ला)॥ २.२.१.१२

इति प्रथमः खण्डः ॥ १ ॥



## सूक्तं (५)

१. अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।
एहीमस्य द्रवा पिब ॥ ७२५ ॥ २.२.२.१

२. शाचिगो शाचिपूजनायं रणाय ते सुतः ।
आखण्डल प्र हूयसे ॥ ७२६ ॥ २.२.२.२

३. यस्ते शृङ्गवृषो णपात्प्रणपात्कुण्डपाय्यः ।
न्यस्मिं दध्र आ मनः ॥ ७२७ ॥ ॥५(दि)॥ २.२.२.३

## सूक्तं (६)

१. आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।
महाहस्ती दक्षिणेन ॥ ७२८ ॥ २.२.२.४

२. विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।
तुविमात्रमवोभिः ॥ ७२९ ॥ २.२.२.५

३. न हि त्वा शूर देवा न मर्तासो दित्सन्तम् ।
भीमं न गां वारयन्ते ॥ ७३० ॥ ॥६(के)॥ २.२.२.६

## सूक्तं (७)

१. अभि त्वा वृषभा सुते सुतꣳसृजामि पीतये ।
तृम्पा व्यश्नुही मदम् ॥ ७३१ ॥ २.२.२.७

२. मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् ।
मा कीं ब्रह्मद्विषं वनः ॥ ७३२ ॥ २.२.२.८

३. इह त्वा गोपरीणसं महे मन्दन्तु राधसे ।
सरो गौरो यथा पिब ॥ ७३३ ॥ ॥७(या)॥ २.२.२.९

## सूक्तं (८)

१. इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
अनाभयिन्ररिमा ते ॥ ७३४ ॥ २.२.२.१०

२. नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः ।
अश्वो न निक्तो नदीषु ॥ ७३५ ॥ २.२.२.११

३. तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः ।
इन्द्र त्वास्मिंत्सधमादे ॥ ७३६ ॥ ॥८(थौ)॥ २.२.२.१२

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (९)

१. इद॰ह्यन्वोजसा सुत॰राधानां पते ।
पिबा त्वा३स्य गिर्वणः ॥ ७३७ ॥ २.२.३.१

२. यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम् ।
स त्वा ममत्तु सोम्य ॥ ७३८ ॥ २.२.३.२

३. प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः ।
प्र बाहू शूर राधसा ॥ ७३९ ॥ ॥९(पी)॥ २.२.३.३

सूक्तं (१०)

१. आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।
सखाय स्तोमवाहसः ॥ ७४० ॥ २.२.३.४

२. पुरूतमं पुरूणामीशानं वार्याणाम् ।
इन्द्र॰ सोमे सचा सुते ॥ ७४१ ॥ २.२.३.५

३. स घा नो योग आ भुवत्स राये स पुरन्ध्या ।
गमद्वाजेभिरा स नः ॥ ७४२ ॥ ॥१०(टी)॥ २.२.३.६

सूक्तं (११)

१. योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इन्द्रमूतये ॥ ७४३ ॥ २.२.३.७

२. अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।
यं ते पूर्वं पिता हुवे ॥ ७४४ ॥ २.२.३.८

३. आ घा गमद्यदि श्रवत्सहस्त्रिणीभिरूतिभिः ।
वाजेभिरुप नो हवम् ॥ ७४५ ॥ ॥११(ला)॥ २.२.३.९

## सूक्तं (१२)

१. इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
विदे वृधस्य दक्षस्य महा२ँहि षः ॥ ७४६ ॥ २.२.३.१०

२. स प्रथमे व्योमनि देवाना२ँ सदने वृधः ।
सुपारः सुश्रवस्तमः समप्सुजित् ॥ ७४७ ॥ २.२.३.११

३. तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम् ।
भवा नः सुम्ने अन्तमः सखा वृधे ॥ ॥ ७४८ ॥ ॥१२(वा)॥ २.२.३.१२

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१३)

१. एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरति२ँ स्वध्वरं विश्वस्य दूतममृतम् ॥ ७४९ ॥ २.२.४.१

२. स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देव२ँ राधो जनानाम् ॥२ ॥ ॥ ७५० ॥ ॥१९(तु )॥ २.२.४.२

## सूक्तं (१४)

१. प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥ ७५१ ॥ २.२.४.३

२. उदुस्त्रियाः सृजते सूर्यः सचा उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥ ७५२ ॥ ॥१४(वा)॥ २.२.४.४

सूक्तं (१५)

१. इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं॰ हि गच्छथः ॥ ७५३ ॥ २.२.४.५

२. युवं चित्रं ददथुर्भोजनं नरा चोदेथा॰ सूनृतावते ।
अर्वाग्रथ॰ समनसा नि यच्छतं पिबत॰ सोम्यं मधु ॥ ७५४ ॥ ॥१५(चा)॥ २.२.४.६

इति चतुर्थः खण्डः ॥ ४ ॥

सूक्तं (१६)

१. अस्य प्रत्नामनु द्युत॰ शुक्रं दुदुह्रे अह्रयः ।
पयः सहस्रसामृषिम् ॥ ७५५ ॥ २.२.५.१

२. अय॰ सूर्य इवोपदृगय॰ सरा॰सि धावति ।
सप्त प्रवत आ दिवम् ॥ ७५६ ॥ २.२.५.२

३. अयं विश्वानि तिष्ठति पुनानो भुवनोपरि ।
सोमो देवो न सूर्यः ॥ ७५७ ॥ ॥१६(ते)॥ २.२.५.३

## सूक्तं (१७)

१. एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
हरिः पवित्रे अर्षति ॥ ७५८ ॥ २.२.५.४

२. एष प्रत्नेन मन्मना देवो देवेभ्यस्परि ।
कविर्विप्रेण वावृधे ॥ ७५९ ॥ २.२.५.५

३. दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यसे ।
क्रन्दं देवा२ँ अजीजनः ॥ ७६० ॥ ॥१७(हा)॥ २.२.५.६

## सूक्तं (१८)

१. उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे ।
पवमान विदा रयिम् ॥ ७६१ ॥ २.२.५.७

२. उपो षु जातमप्तुरं (गोभिर्भङ्गं परिष्कृतम् ।
इन्दुं देवा अयासिषु)* ॥ ७६२ ॥ २.२.५.८

३. उपास्मै गायता नरः (पवमानायेन्दवे ।
अभि देवा२ँ इयक्षते )* ॥ ७६३ ॥ ॥१८(वौ)॥ २.२.५.९

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (१९)

१. प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
वनानि महिषा इव ॥ ७६४ ॥ २.२.६.१

२. अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।
वाजं गोमन्तमक्षरन् ॥ ७६५ ॥ २.२.६.२

३. सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
सोमा अर्षन्तु विष्णवे ॥ ७६६ ॥ ॥१९(वि)॥ २.२.६.३

## सूक्तं (२०)

१. प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अꣳशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ७६७ ॥ २.२.६.४

२. आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः ।
तमीꣳ हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः ॥ ७६८ ॥ ॥२० (रु)॥ २.२.६.५

## सूक्तं (२१)

१. प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
सुता विदथे अक्रमुः ॥ ७६९ ॥ २.२.६.६

२. आदीꣳ हꣳसो यथा गणं विश्वस्यावीवशन्मतिम् ।
अत्यो न गोभिरज्यते ॥ ७७०॥ २.२.६.७

३. आदीꣳ त्रितस्य योषणो हरिꣳ हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥ ७७१ ॥ ॥२१(ली)॥ २.२.६.८

सूक्तं (२२)

१. अया पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः ।
मधोर्धारा असृक्षत ॥ ७७२ ॥ २.२.६.९

२. पवते हर्यतो हरि (रति ह्वराꣳसि रꣳह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः)* ॥ ७७३ ॥ २.२.६.१०

३. प्र सुन्वानास्यान्धसो (मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसꣳ हता मखं न भृगवः)* ॥ ७७४ ॥ ॥२२(लि)॥ २.२.६.११

इति षष्ठः खण्डः ॥ ६ ॥

इति प्रथमप्रपाठके द्वितीयोऽर्धः प्रथमप्रपाठकश्च समाप्तः ॥ १ ॥

इति द्वितीऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः ॥

अथ द्वितीयप्रपाठके प्रथमोऽर्धः ॥ २-१ ॥

(१-१९) १ जमदग्निर्भार्गवः; २, ५, १५ अमहीयुराङ्गिरसः; ३ कश्यपो मारीचः; ४, १० भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ६-७ मेदातिथिः काण्वः; ८ मधुच्छन्दा वैश्वमित्रः; ९ वसिष्ठो मैत्रावरुणिः; ११ उपमन्युर्वासिष्ठः; १२ शंयुर्बार्हस्पत्यः; १३ वालखिल्याः, प्रस्कण्वः काण्वः; १४ नृमेध आङ्गिरसः; १६ नहुषो मानवः; १७ (१-२) सिकता विवावरी, १७ (३) पृश्नियोऽजाः; १८ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; १९ जेता माधुच्छन्दसः ॥ १-५, १०-११, १५-१७ पवमानः सोमः; ६ अग्निः; ७ मित्रावरिणौ; ८, १२-१४, १८-१९ इन्द्रः; ९ इन्द्राग्नी ॥ १-१०, १५, १८ गायत्री; ११ त्रिष्टुप्; १२-१४ प्रगाथः = (विषमा बृहती, समा सतोबृहती); १६, १९ अनुष्टुप्; १७ जगती ॥

सूक्तं (१)

१. पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः ।
अभि विश्वानि काव्या ॥ ७७५ ॥ २.३.१.१

२. त्वꣳसमुद्रिया अपोऽग्रियो वाच ईरयन् ।
पवस्व विश्वचर्षणे ॥ ७७६ ॥ २.३.१.२

३. तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे ।
तुभ्यं धावन्ति धेनवः ॥ ७७७ ॥ ॥१ (यी)॥ २.३.१.३

सूक्तं (२)

१. पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने ।
विश्वा अप द्विषो जहि ॥ ७७८ ॥ २.३.१.४

२. यस्य ते सख्ये वयऽसासह्याम पृतन्यतः ।
तवेन्दो द्युम्न उत्तमे ॥ ७७९ ॥ २.३.१.५

३. या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे ।
रक्षा समस्य नो निदः ॥ ७८० ॥ ॥२(ह)॥ २.३.१.६

## सूक्तं (३)

१. वृषा सोम द्युमाऽअसि वृषा देव वृषव्रतः ।
वृषा धर्माणि दध्रिषे ॥ ७८१ ॥ २.३.१.७

२. वृष्णस्ते वृष्ण्यऽशवो वृषा वनं वृषा सुतः ।
स त्वं वृषन्वृषेदसि ॥ ७८२ ॥ २.३.१.८

३. अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः ।
वि नो राये दुरो वृधि ॥ ७८३ ॥ ॥३ (लु)॥ २.३.१.९

## सूक्तं (४)

१. वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।
पवमान स्वर्दृशम् ॥ ७८४ ॥ २.३.१.१०

२. यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः ।
द्रोणे सधस्थमश्नुषे ॥ ७८५ ॥ २.३.१.११

३. आ पवस्व सुवीर्यं मन्दमानः स्वायुध ।
इहो ष्विन्दवा गहि ॥ ७८६ ॥ ॥४ (यौ)॥ २.३.१.१२

## सूक्तं (५)

१. पवमानस्य ते वयं पवित्रमभ्युन्दतः ।
सखित्वमा वृणीमहे ॥ ७८७ ॥ २.३.१.१३

२. ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया ।
तेभिर्नः सोम मृडय ॥ ७८८ ॥ २.३.१.१४

३. स नः पुनान आ भर रयिं वीरवतीमिषम् ।
ईशानः सोम विश्वतः ॥ ७८९ ॥ ॥५ (ला)॥ २.३.१.१५

इति प्रथमः खण्डः ॥ १ ॥

## सूक्तं (६)

१. अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ ७९० ॥ २.३.२.१

२. अग्निमग्निꣳहवीमभिः सदा हवन्त विश्पतिम् ।
हव्यवाहं पुरुप्रियम् ॥ ७९१ ॥ २.३.२.२

३. अग्ने देवाꣳ इहा वह जज्ञानो वृक्तबर्हिषे ।
असि होता न ईड्यः ॥ ७९२ ॥ ॥६ (यौ)॥ २.३.२.३

## सूक्तं (७)

१. मित्रं वयꣳ हवामहे वरुणꣳ सोमपीतये ।
या जाता पूतदक्षसा ॥ ७९३ ॥ २.३.२.४

२. ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती ।
ता मित्रावरुणा हुवे ॥ ७९४ ॥ २.३.२.५

३. वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ।
करतां नः सुराधसः ॥ ७९५ ॥ ॥७ (वा)॥ २.३.२.६

## सूक्तं (८)

१. इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥ ७९६ ॥ २.३.२.७

२. इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
इन्द्रो वज्री हिरण्ययः ॥ ७९७ ॥ २.३.२.८

३. इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ॥ ३ ॥ ॥ ७९८ ॥ २.३.२.९

४. इन्द्रो दीर्घाय चक्षस आ सूर्यꣳरोहयद्दिवि ।
वि गोभिरद्रिमैरयत् ॥ ७९९ ॥ ॥८ (खा)॥ २.३.२.१०

## सूक्तं (९)

१. इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे ।
धिया धेना अवस्यवः ॥ ८०० ॥ २.३.२.११

२. ता हि शश्वन्त ईडत इत्था विप्रास ऊतये ।
सबाधो वाजसातये ॥ ८०१ ॥ २.३.२.१२

३. ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे ।
मेधसाता सनिष्यवः ॥ ८०२ ॥ ॥९ (हु)॥ २.३.२.१३

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (१०)

१. वृषा पवस्व धारया मरुत्वते च मत्सरः ।
विश्वा दधान ओजसा ॥ ८०३ ॥ २.३.३.१

२. तं त्वा धर्त्तारमोण्योः३ पवमान स्वर्दृशम् ।
हिन्वे वाजेषु वाजिनम् ॥ ८०४ ॥ २.३.३.२

३. अया चित्तो विपानया हरिः पवस्व धारया ।
युजं वाजेषु चोदय ॥ ८०५ ॥ ॥१०(ट)॥ २.३.३.३

सूक्तं (११)

१. वृषा शोणो अभिकनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्याम् ।
इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् ॥ ८०६ ॥ २.३.३.४

२. रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमꣳशुम् ।
पवमान सन्तनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः ॥ ८०७ ॥ २.३.३.५

३. एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम् ।
परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ॥ ८०८ ॥ ॥११ (रि)॥ २.३.३.६

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१२)

१. त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥ ८०९ ॥ २.३.४.१

२. स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वꣳरथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ ८१० ॥ ॥१२ (फु)॥ २.३.४.२

[धा० १० । उ० २ । स्व० ५ ।]

## सूक्तं (१३)

१. अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ ८११ ॥ २.३.४.३

२. शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ ८१२ ॥ ॥१३ (हि)॥ २.३.४.४

[धा० १६ । उ० नास्ति । स्व० ३ ]

## सूक्तं (१४)

१. त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ ८१३ ॥ २.३.४.५

२. मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वया भूषन्ति वेधसः ।
तव श्रवाꣳस्युपमान्युक्थ्य सुतेष्विन्द्र गिर्वणः ॥ ८१४ ॥ ॥१४ (ल)॥ २.३.४.६

[धा° १२ । उ° नास्ति । स्व° १]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१५)

१. यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।
देवावीरघशꣳसहा ॥ ८१५ ॥ २.३.५.१

२. जघ्निर्वृत्रममित्रियꣳसस्निर्वाजं दिवेदिवे ।
गोषातिरश्वसा असि ॥ ८१६ ॥ २.३.५.२

३. सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः ।
सीदं च्छ्येनो न योनिमा ॥ ८१७ ॥ ॥१५ (चौ)॥ २.३.५.३

[धा° १२ । उ° १ । स्व° नास्ति ।]

## सूक्तं (१६)

१. अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ८१८ ॥ २.३.५.४

२. समु प्रिया अनूषत गावो मदाय घृष्वयः ।
सोमासः कृण्वते पथः पवमानास इन्दवः ॥ ८१९ ॥ २.३.५.५

३. य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।
यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ ८२० ॥ ॥१६(फु)॥ २.३.५.६

[धा॰ १९ । उ॰ २ । स्व॰ ५ ।]

## सूक्तं (१७)

१. वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
प्राणा सिन्धूनां कलशाꣳ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ८२१ ॥ २.३.५.७

२. मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशाꣳ असिष्यदत् ।
त्रितस्य नाम जनयन्मधु क्षरन्निन्द्रस्य वायुꣳ सख्याय वर्धयन् ॥ ८२२॥ २.३.५.८

३. अयं पुनान उषसो अरोचयदयꣳ सिन्धुभ्यो अभवदु लोककृत् ।
अयं त्रिः सप्त दुदुहान आशिरꣳ सोमो हृदे पवते चारु मत्सरः ॥ ८२३ ॥ ॥१७ (गी)॥ २.३.५.९

[धा॰ ३६ । उ ३ । स्व॰ ४ ।]

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (१८)

१. एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।
एवा ते राध्यं मनः ॥ ८२४ ॥ २.३.६.१

२. एवा रातिस्तुविमघ विश्वेभिर्धायि धातृभिः ।
अधा चिदिन्द्र नः सचा ॥ ८२५ ॥ २.३.६.२

३. मो षु ब्रह्मेव तन्द्रयुर्भवो वाजानां पते ।
मत्स्वा सुतस्य गोमतः ॥ ८२६ ॥ ॥१८ (ति)॥ २.३.६.३

[धा॰ १४ । उ॰ १ । स्व॰ ३ ।]

## सूक्तं (१९)

१. इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥ ८२७ ॥ २.३.६.४

२. सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्र नोनुमो जेतारमपराजितम् ॥ ८२८ ॥ २.३.६.५

३. पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदा वाजस्य गोमत स्तोतृभ्यो मꣳहते मघम् ॥ ८२९ ॥ ॥१९ (ली)॥ २.३.६.६

[धा १८ । उ॰ नास्ति । स्व॰ ४ ।]

इति षष्ठः खण्डः ॥ ६ ॥

इति द्वितीयप्रपाठके प्रथमोऽर्धः ॥ २ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ॥

अथ द्वितीयप्रपाठके द्वितीयोऽर्धः ॥ २-२ ॥

(१-१९) १ जमदग्निर्भार्गवः; २ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ; ३ कविर्भार्गवः; ४ कश्यपो मरीचः; ५ मेदतिथिः काण्वः; ६-७ मधुच्छन्दा वैश्वामित्रः; ८ भरद्वाजो बार्हस्पत्यः; ९ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); १० पराशरः शाक्त्यः; ११ पुरुहन्मा आङ्गिरसः; १२ मेध्यातिथिः काण्वः; १३ वसिष्ठो मैत्रावरुणिः; १४ त्रित आप्त्यः; १५ यथातिर्नाहुषः; १६ पवित्र आंगिरसः; १७ सौभरिः काण्वः; १८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; १९ तिरश्चीरांगिरसौ ॥ १-४, ९, १०, १४-१६ पवमानः सोमः ; ५, १७ अग्निः; ६ मित्रावरुणौ; ७ मरुतः ७ (१,३) इन्द्रश्च; ८ इन्द्राग्नी; ११-१३, १८-१९ इन्द्रः ॥ १-८, १४ गायत्री; ९ (३) द्विपदा विराट्; १० त्रिष्टुप्; ९ (१-२), ११, १३ प्रगाथः = (विषमा बृहती, समा सतोबृहती); १२ बृहती; १५, १९ अनुष्टुप्; १६ जगती; १७ प्रगाथः = (विषमा ककुप् , समा सतोबृहती); १८ उष्णिक् ॥

सूक्तं (१)

१. एत असृग्रमिन्दवस्तिरः पवित्रमाशवः ।
विश्वान्यभि सौभगा ॥ ८३० ॥ २.४.१.१

२. विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः ।
त्मना कृण्वन्तो अर्वतः ॥ ८३१ ॥ २.४.१.२

३. कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् ।
इडामस्मभ्य९ संयतम् ॥१ (या)॥ ॥ ८३२ ॥ ॥१ (या)॥ २.४.१.३

[धा० ७ । उ० नास्ति । स्व० २ ।]

सूक्तं (२)

१. राजा मेधाभिरीयते पवमानो मनावधि ।
अन्तरिक्षेण यातवे ८३३ ॥ २.४.१.४

२. आ नः सोम सहो जुवो रूपं न वर्चसे भर ।
सुष्वाणो देववीतये ॥ ८३४ ॥ २.४.१.५

३. आ न इन्दो शातग्विनं गवां पोष९ स्वश्व्यम् ।
वहा भगत्तिमूतये ॥ ८३५ ॥ ॥२ (ला)॥ २.४.१.६

[धा० १४ । उ० नास्ति । स्व० २ ।]

सूक्तं (३)

१. तं त्वा नृम्णानि बिभ्रत९ सधस्थेषु महो दिवः ।
चारु९ सुकृत्ययेमहे ॥ ८३६ ॥ २.४.१.७

२. संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् ।
शतं पुरो रुरुक्षणिम् ॥ ८३७ ॥ २.४.१.८

३. अतस्त्वा रयिरभ्ययद्राजान९ सुक्रतो दिवः ।
सुपर्णो अव्यथी भरत् ॥ ८३८ ॥ २.४.१.९

४. अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे ।
अभिष्टिकृद्विचर्षणिः ॥ ८३९ ॥ २.४.१.१०

५. विश्वस्मा इत्स्वर्दृशे साधारणꣳ रजस्तुरम् ।
गोपामृतस्य विर्भरत् ॥ ८४० ॥ ॥३ (हू)॥ २.४.१.११

[धा॰ २६ । उ॰ नास्ति । स्व॰ ६ ।]

सूक्तं (४)

१. इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
इन्दो रुचाभि गा इहि ॥ ८४१ ॥ २.४.१.१२

२. पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः ।
हरे सृजान आशिरम् ॥ ८४२ ॥ २.४.१.१३

३. पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् ।
द्युतानो वाजिभिर्हितः ॥ ८४३ ॥ ॥४ (या)॥ २.४.१.१४

इति प्रथमः खण्डः ॥ १ ॥

[धा॰ १७ । उ॰ नास्ति | स्व॰ २ ॥]

सूक्तं (५)

१. अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड्जुह्वास्यः ॥ ८४४ ॥ २.४.२.१

२. यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।
तस्य स्म प्राविता भव ॥ ८४५ ॥ २.४.२.२

३. यो अग्निं देववीतये हविष्मा२ आविवासति ।
तस्मै पावक मृडय ॥ ८४६ ॥ ॥५ (रि)॥ २.४.२.३

[धा॰ १३ । उ॰ नास्ति । स्व॰ ३ ।]



सूक्तं (६)

१. मित्र२हुवे पूतदक्षं वरुणं च रिशादसम् ।
धियं घृताचीं२साधन्ता ८४७ ॥ २.४.२.४

२. ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुं बृहन्तमाशाथे ॥ ८४८ ॥ २.४.२.५

३. कवी नो मित्रावरुणा तुविजाता उरुक्षया ।
दक्षं दधाते अपसम् ॥ ८४९ ॥ ॥६ (व)॥ २.४.२.६

[धा॰ १० । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (७)

१. इन्द्रेण स२हि दृक्षसे सजग्मानो अबिभ्युषा ।
मन्दू समानवर्चसा ॥ ८५० ॥ २.४.२.७

२. आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
दधाना नाम यज्ञियम् ॥ ८५१ ॥ २.४.२.८

३. वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
अविन्द उस्रिया अनु ॥ ८५२ ॥ ॥७ (ति)॥ २.४.२.९

[धा॰ १४ । उ॰ १ । स्व॰ ३ ।]

सूक्तं (८)

१. ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् ।
इन्द्राग्नी न मर्धतः ॥ ८५३ ॥ २.४.२.१०

२. उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
ता नो मृडात ईदृशे ॥ ८५४ ॥ २.४.२.११

३. हथो वृत्राण्यार्या हथो दासानि सत्पती ।
हथो विश्वा अप द्विषः ॥ ८५५ ॥ ॥८ (पी)॥ २.४.२.१२

इति द्वितीयः खण्डः ॥ २ ॥

[धा° १० । उ° १ | स्व° ४ ॥]

सूक्तं (९)

१. अभि सोमास आयवः पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥ ८५६ ॥ २.४.३.१

२. तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् ।
अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥ ८५७ ॥ २.४.३.२

३. नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्र्यः ॥ ८५८ ॥ ॥९ (वु)॥ २.४.३.३

[धा° १५ । उ° नास्ति | स्व° ५ ॥]

सूक्तं (१०)

१. तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ८५९ ॥ २.४.३.४

२. सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
सोमः सुत ऋच्यते पूयमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥ ८६० ॥ २.४.३.५

३. एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति ।
इन्द्रमा विश बृहता मदेन वर्धया वाचं जनया पुरन्धिम् ॥ ८६१ ॥ ॥१० (पी)॥ २.४.३.६

इति तृतीयः खण्डः ॥ ३ ॥

[धा° १० । उ° १ | स्व° ४ ॥]

## सूक्त (११)

१. यद्याव इन्द्र ते शत२ँशतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्र२ँसूर्या अनु न जातमष्ट रोदसी ॥ ८६२ ॥ २.४.४.१

२. आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।
अस्मा२ँअव मघवन् गोमति व्रजे वज्रिंचित्राभिरूतिभिः ॥ ८६३ ॥ ॥११ (ली)॥ २.४.४.२

[धा° १९ । उ° नास्ति । स्व° ४ । ]

## सूक्त (१२)

१. वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ ८६४ ॥ २.४.४.३

२. स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।
कदा सुतं तृषाण ओक आ गमदिन्द्र स्वब्दीव वꣳसगः ॥ ८६५ ॥ २.४.४.४

३. कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम् ।
पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥ ८६६ ॥ ॥१२ (छा)॥ २.४.४.५

[धा॰ २७ । उ॰ २ । स्व॰ २ ।]

सूक्तं (१३)

१. तरणिरित्सिषासति वाजं पुरंध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ ८६७ ॥ २.४.४.६

२. न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधन्तꣳरयिर्नशत् ।
सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥ ८६८ ॥ ॥१३ (यि)॥ २.४.४.७

इति चतुर्थः खण्डः ॥ ४ ॥

[धा॰ १७ । उ॰ नास्ति। स्व॰ ३ ॥]

सूक्तं (१४)

१. तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
हरिरेति कनिक्रदत् ॥ ८६९ ॥ २.४.५.१

२. अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः ।
मर्जयन्तीर्दिवः शिशुम् ॥ ८७० ॥ २.४.५.२

३. रायः समुद्रा५श्चतुरोऽस्मभ्य५ सोम विश्वतः ।
आ पवस्व सहस्रिणः ॥ ८७१ ॥ ॥१४ (टा)॥ २.४.५.३

[धा° १८ । उ° १ | स्व° २ ॥]



## सूक्तं (१५)

१. सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरं देवान्गच्छन्तु वो मदाः ॥ ८७२ ॥ २.४.५.४

२. इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसः ॥ ८७३ ॥ २.४.५.५

३. सहस्रधारः पवते समुद्रो वाचमीङ्खयः ।
सोमस्पती रयीणा५सखेन्द्रस्य दिवेदिवे ॥ ८७४ ॥ ॥१५ (लि)॥ २.४.५.६

[धा° २९ । उ° नास्ति । स्व° २ । ]

## सूक्तं (१६)

१. पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तः सं तदाशत ॥ ८७५ ॥ २.४.५.७

२. तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवा व्यस्थिरन् ।
अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधि रोहन्ति तेजसा ॥ ८७६॥ २.४.५.८

३. अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥ ८७७ ॥ ॥१६ (टु)॥ २.४.५.९

इति पञ्चमः खण्डः ॥ ५ ॥

[धा॰ ३८ । उ॰ १ | स्व॰ ५ ॥]

सूक्तं (१७)

१. प्र मꣳहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
उपस्तुतासो अग्नये ॥ ८७८ ॥ २.४.६.१

२. आ वꣳसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
कुविन्नो अस्य सुमतिर्भवीयस्यच्छा वाजेभिरागमत् ॥ ८७९ ॥ ॥१७ (या)॥ २.४.६.२

[धा॰ १७ । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (१८)

१. तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ८८० ॥ २.४.६.३

२. येन ज्योतीꣳष्यायवे मनवे च विवेदिथ ।
मन्दानो अस्य बर्हिषो वि राजसि ॥ ८८२ ॥ २.४.६.४

३. तदद्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा ।
वृषपत्नीरपो जया दिवेदिवे ॥ ८८२ ॥ ॥१८ (ह)॥ २.४.६.५

[धा॰ २१ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (१९)

१. श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महा॑ऽसि ॥ ८८३ ॥ २.४.६.६

२. यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत् ।
चिकित्विन्मनसं धियं प्रत्यामृतस्य पिप्युषीम् ॥ ८८४ ॥ २.४.६.७

३. तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः ।
पुरूण्यस्य पौ॑स्या सिषासन्तो वनामहे ॥ ८८५ ॥ ॥१९ (फा)॥ २.४.६.८

[धा° १५ । उ° २ | स्व° २ ॥]

इति षष्ठः खण्डः ॥ ६ ॥

इति द्वितीयप्रपाठके द्वितीयोऽर्धः द्वितीयप्रपाठकश्च समाप्तः॥ २ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः ॥

अथ तृतीयप्रपाठके प्रथमोऽर्धः ॥ ३-१ ॥

(१-२२) १ अकृष्टा माषाः; २ अमहीयुराङ्गिरसः ; ३ मेदतिथिः काण्वः ; ४, १२ बृहन्मातिराङ्गिरसः; ५ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ६ सुतंभर आत्रेयः; ७ गृत्समदः शौनकः ; ८, २१ गोतमो राहूगणः; ९, १३ वसिष्ठो मैत्रावरुणिः; १० हृढच्युत आगस्त्यः; ११ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); १४ रेभः काश्यपः; १५ पुरुहन्मा आङ्गिरसः; १६ असितः काश्यपो देवलो वा; १७ (१) शक्तिर्वासिष्ठः; १७ (२) उरुरांगिरसः; १८ अग्निश्चाक्षुषः; १९ प्रतर्दनो दैवोदासिः; २० प्रयोगो भार्गवः; २१ पावकोऽग्निर्बार्हस्पत्यो वा, गृहपतियविष्ठौ सहसः पुत्रावन्यतरो वा; २२, ॥ १-५, १०-१२, १६-१९ पवमानः सोमः ; ६, २० अग्निः; ७ मित्रावरुणौ; ८, १३-१५, २१ इन्द्रः; ॥ १, ६ जगती; २-५, ७-१०, १२, १६, २० गायत्री; ११, १५ प्रगाथः = (विषमा बृहती, समा सतोबृहती); १३ विराट्; १४ (१) अति जगती; १४ (२-३) उपरिष्टाद् बृहती; १७ काकुभः प्रगाथः = (विषमा ककुप्, समा सतोबृहती) १८ उष्णिक्; १९ त्रिष्टुप्; २१ अनुष्टुप् ॥

सूक्तं (१)

१. प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्पयसा धरीमणि ।
प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः ॥ ८८६ ॥ २.५.१.१

२. उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति केतवः ।
यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति ॥ ८८७ ॥ २.५.१.२

३. विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परि यन्ति केतवः ।
व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि ॥ ८८८ ॥ ॥१ (वी)॥ २.५.१.३

[धा॰ ३५ । उ॰ नास्ति । स्व॰ ४ ।]

## सूक्तं (२)

१. पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
ज्योतिर्वैश्वानरं बृहत् ॥ ८८९ ॥ २.५.१.४

२. पवमान रसस्तव मदो राजन्नदुच्छुनः ।
वि वारमव्यमर्षति ॥ ८९० ॥ २.५.१.५

३. पवमानस्य ते रसो दक्षो वि राजति द्युमान् ।
ज्योतिर्विश्वꣳ स्वर्दृशे ॥ ८९१ ॥ ॥२ (पा)॥ २.५.१.६

[धा॰ २० । उ॰ १ । स्व॰ २ ।]

## सूक्तं (३)

१. प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।
घ्नन्तः कृष्णामप त्वचम् ॥ ८९२ ॥ २.५.१.७

२. सुवितस्य वनामहेऽति सेतुं दुराय्यम् ।
साह्याम दस्युमव्रतम् ॥ ८९३ ॥ २.५.१.८

३. शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः ।
चरन्ति विद्युतो दिवि ॥ ८९४ ॥ २.५.१.९

४. आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् ।
अश्ववत्सोम वीरवत् ॥ ८९५ ॥ २.५.१.१०

५. पवस्व विश्वचर्षण आ मही रोदसी पृण ।
उषाः सूर्यो न रश्मिभिः ॥ ८९६ ॥ २.५.१.११

६. परि नः शर्मयन्त्या धारया सोम विश्वतः ।
सरा रसेव विष्टपम् ॥ ८९७ ॥ ॥३ (भी)॥ २.५.१.१२

[धा° ३५ । उ° ४ | स्व° ४ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (४)

१. आशुरर्ष बृहन्मते परि प्रियेण धाम्ना ।
यत्रा देवा इति ब्रुवन् ॥ ८९८ ॥ २.५.२.१

२. परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः ।
वृष्टिं दिवः परि स्रव ॥ ८९९ ॥ २.५.२.२

३. अयꣳ स यो दिवस्परि रघुयामा पवित्र आ ।
सिन्धोरूर्मा व्यक्षरत् ॥ ९०० ॥ २.५.२.३

४. सुत एति पवित्र आ त्विषिं दधान ओजसा ।
विचक्षाणो विरोचयन् ॥ ९०१ ॥ २.५.२.४

५. आविवासन्परावतो अथो अर्वावतः सुतः ।
इन्द्राय सिच्यते मधु ॥ ९०२ ॥ २.५.२.५

६. समीचीना अनूषत हरिꣳ हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥ ९०३ ॥ ॥४ (जी)॥ २.५.२.६

[धा° ३२ । उ° ३ । स्व° ४ ।]

सूक्तं (५)

१. हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम् ।
महामिन्दुं महीयुवः ॥ ९०४ ॥ २.५.२.७

२. पवमान रुचारुचा देवो देवेभ्यः सुतः ।
विश्वा वसून्या विश ॥ ९०५ ॥ २.५.२.८

३. आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ।
इषे पवस्व संयतम् ॥ ९०६ ॥ ॥५ (ह)॥ २.५.२.९

[धा० ११ । उ० ना | स्व० १ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (६)

१. जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥ ९०७ ॥ २.५.३.१

२. त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्वामाहुः सहसस्पुत्रमङ्गिरः ॥ ९०८ ॥ २.५.३.२

३. यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते ।
इन्द्रेण देवैः सरथꣳस बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥ ९०९ ॥ ॥६ (वे)॥ २.५.३.३

[धा० ३० । उ० नास्ति । स्व० ७ ।]

## सूक्तं (७)

३ १ २ ३ १ २र

१. अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।

२उ ३ १ २ ३ १ २

ममेदिह श्रुतꣳ हवम् ॥ ९१० ॥ २.५.३.४

१ २ ३ १ २ ३ १ २र ३ २

२. राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।

३ १ २

सहस्रस्थूण आशाते ॥ ९११ ॥ २.५.३.५

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २

३. ता सम्राजा घृतासुती आदित्या दानुनस्पती ।

१ २ ३ १ २

सचेते अनवह्वरम् ॥ ९१२ ॥ ॥७ (पि)॥ २.५.३.६

[धा॰ १५ । उ॰ १ । स्व॰ ३ ।]

## सूक्तं (८)

१ २ ३ २ ३ १ २ ३ १ २र

१. इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।

३ १ २ ३ १ २र

जघान नवतीर्नव ॥ ९१३ ॥ २.५.३.७

३ १ २र ३ २उ ३ १ २ ३ १ २

२. इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् ।

१ २ ३ १ २

तद्विदच्छर्यणावति ॥ ९१४ ॥ २.५.३.८

२उ ३ १ २ ३ २ ३ १ २ ३क २र

३. अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।

३ २ ३ १ २ ३ २

इत्था चन्द्रमसो गृहे ॥ ९१५ ॥ ॥८ (ठी)॥ २.५.३.९

[धा॰ १३ । उ॰ २ । स्व॰ ४ ।]

## सूक्तं (९)

१. इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः ।
अभ्राद्वृष्टिरिवाजनि ॥ ९१६ ॥ २.५.३.१०

२. शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः ।
ईशाना पिप्यतं धियः ॥ ९१७ ॥ २.५.३.११

३. मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये ।
मा नो रीरधतं निदे ॥ ९१८ ॥ ॥९ (चा)॥ २.५.३.१२

[धा० १२ । उ० १ | स्व० २ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (१०)

१. पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
मरुद्भ्यो वायवे मदः ॥ ९१९ ॥ २.५.४.१

२. सं देवैः शोभते वृषा कविर्योनावधि प्रियः ।
पवमानो अदाभ्यः ॥ ९२० ॥ २.५.४.२

३. पवमान धिया हितो३ऽभि योनिं कनिक्रदत् ।
धर्मणा वायुमारुहः ॥ ९२१ ॥ ॥१० (ख)॥ २.५.४.३

[धा० ११ । उ० २ । स्व० २ ।]

सूक्तं (११)

१. तवाह॒ सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधी॒रति ता॒इहि ॥ ९२२ ॥ २.५.४.४

२. तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि ।
घृणा तपन्तमति सूर्यं परः शकुना इव पप्तिम ॥ ९२३ ॥ ॥११ (ति)॥ २.५.४.५

[धा° १४ । उ° १ । स्व° ३ ।]

## सूक्तं (१२)

१. पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
शुम्भन्ति विप्रं धीतिभिः ॥ ९२४ ॥ २.५.४.६

२. आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम् ।
ध्रुवे सदसि सीदतु ॥ ९२५ ॥ २.५.४.७

३. नू नो रयिं महामिन्दोऽस्मभ्य॒ सोम विश्वतः ।
आ पवस्व सहस्रिणम् ॥ ९२६ ॥ ॥१२ (चा)॥ २.५.४.८

[धा° १२ । उ° २ | स्व° २ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१३)

१. पिबा सोममिन्द्र मदन्तु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्या॒ सुयतो नार्वा ॥ ९२७ ॥ २.५.५.१

२. यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हꣳसि ।
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ ९२८ ॥ २.५.५.२

३. बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ९२९ ॥ २.५.५.३

[धा॰ १२ । उ॰ १ । स्व॰ २ ।]

## सूक्तं (१४)

१. विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ ९३० ॥ २.५.५.४

२. नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे ।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ ९३१ ॥ २.५.५.५

३. समु रेभासो अस्वरन्निन्द्रꣳ सोमस्य पीतये ।
स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ९३२ ॥ २.५.५.६

[धा॰ २२ । उ॰ १ । स्व॰ ४ ।]

## सूक्तं (१५)

१. यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ ९३३ ॥ २.५.५.७

२. इन्द्रं तꣳ शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।
हस्तेन वज्रः प्रति धायि दर्शतो महां देवो न सूर्यः ॥ ९३४॥ ॥१५ (चि)॥ २.५.५.८

इति पञ्चमः खण्डः ॥ ५ ॥

[धा° १७ । उ° १ | स्व° ३ ॥]

## सूक्तं (१६)

   १ २   ३ २   ३ २   ३ १ २र   ३क २र ३ २
१. परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः ।
   ३ १ २   ३ १ २
   स्वानैर्याति कविक्रतुः ॥ ९३५ ॥ २.५.६.१

   २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
२. स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् ।
   ३ २ ३ १ २ ३ १ २
   महान्मही ऋतावृधा ॥ ९३६ ॥ २.५.६.२

   २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
३. प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।
   ३क २र ३ १ २
   वीत्यर्ष पनिष्टये ॥ ९३७ ॥ ॥१६ (रि)॥ २.५.६.३

[धा° ३ । उ° नास्ति । स्व° ३ ।]

## सूक्तं (१७)

   २ ३क ऽ १ २ ३ १ २ ३ १ २ ३ १ २
१. त्वꣳ ह्या३ꣳङ्ग दैव्य पवमान जनिमानि द्युमत्तमः ।
   ३ १ २ ३ १ २
   अमृतत्वाय घोषयन् ॥ ९३८ ॥ २.५.६.४

   २ ३ १ २ ३ १ २ ३उ ३ १ २ ३२
२. येना नवग्वा दध्यङ्ङपोर्णुते येन विप्रास आपिरे ।
   ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
   देवानाꣳ सुम्ने अमृतस्य चारुणो येन श्रवाꣳस्याशत ॥ ९३९ ॥ ॥१७ (पौ)॥ २.५.६.५

[धा° १० । उ° २ । स्व° २ ]

## सूक्तं (१८)

१. सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
अग्रे वाचः पवमानः कनिक्रदत् ॥ ९४० ॥ २.५.६.६

२. धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम् ।
अभि त्रिपृष्ठं मतयः समस्वरन् ॥ ९४१ ॥ २.५.६.७

३. असर्जि कलशाꣳ अभि मीढ्वांत्सप्तिर्न वाजयुः ।
पुनानो वाचं जनयन्नसिष्यदत् ॥ ९४२ ॥ ॥१८ (फा)॥ २.५.६.८

[धा° १० । उ° २ । स्व° २ ।]

सूक्तं (१९)

१. सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ९४३ ॥ २.५.६.९

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन् ॥ ९४४ ॥ २.५.६.१०

२. प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिर स्तोमान्पवमानो मनीषाः ।
अन्तः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ॥ ९४५ ॥ ॥१९ (फू)॥ २.५.६.११

[धा° ३० । उ° २ । स्व° ६ ।]

इति षष्ठः खण्डः ॥ ६ ॥

सूक्तं (२०)

१. अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।
अच्छा नप्त्रे सहस्वते ॥ ९४६ ॥ २.५.६.१२

२. अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या ।
अस्य क्रत्वा यशस्वतः ॥ ९४७ ॥ २.५.६.१३

३. अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते ।
आ वाजैरुप नो गमत् ॥ ९४८ ॥ ॥२० (डा)॥ २.५.६.१४

[धा° ८ । उ° ३ । स्व° २ ।]

## सूक्तं (२१)

१. इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ९४९ ॥ २.५.६.१५

२. न किष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
न किष्ट्वानु मज्मना न किः स्वश्व आनशे ॥ ९५० ॥ २.५.६.१६

३. इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ ९५१ ॥ ॥२१ (र)॥ २.५.६.१७

[धा° ८ । उ° नास्ति । स्व° १ ।]

## सूक्तं (२२)

१. इन्द्र जुषस्व प्र वहा याहि शूर हरिह ।
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ॥ ९५२ ॥ २.५.६.१८

२. इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।
अस्य सुतस्य स्वा३र्नोप त्वा मदाः सुवाचो अस्थुः ॥ ९५३ ॥ २.५.६.१९

३. इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥ ९५४ ॥ ॥२२ (ङ)॥ २.५.६.२०

इति सप्तमः खण्डः ॥ ७ ॥

[धा° ११ । उ° ५ | स्व° १ ॥]]

इति तृतीयप्रपाठके प्रथमोऽर्धः ॥ ३ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः ॥

अथ तृतीयप्रपाठके द्वितीयोऽर्धः ॥ ३-२ ॥

(१-२३) १ (अकृष्टा माषादयः) त्रयः ऋषयः; २ कश्यपो मारीचः; ३, ४, १३ असितः काश्यपो देवलो वा; ५ अवत्सारः काश्यपः; ६, १६ जमदग्निर्भागवः; ७ अरुणो वैतहव्यः; ८ उरुचक्रिरात्रेयः; ९ कुरुसुतिः काण्वः; १० भरद्वाजो बार्हस्पत्यः; ११ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; १२ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः; २ कश्यपो मारीचः; ३ गोतमो राहूगणः; ४ अग्निर्भौमः; ५ विश्वामित्रो गाथिनः; ६ जमदग्निर्भार्गवः; ७ वसिष्ठो मैत्रावरुणिः); १४, १५ २३ गोतमो राहूगणः; १७ (१) ऊर्ध्वसद्मा आङ्गिरसः; १७ (२) कृतयशा आङ्गिरसः; १८ त्रित आप्त्यः; १९ रेभसूनू काश्यपौ; २० मन्युर्वासिष्ठः; २१ वसुश्रुत आत्रेयः; २२ नृमेध आङ्गिरसः; ॥ १-६, ११-१३, १६-२० पवमानः सोमः; ७, २१ अग्निः; ८ मित्रावरुणौ; ९, १४-१५, २२-२३ इन्द्रः; १० इन्द्राग्नी ॥ १, ७ जगती; २-६, ८-११,१३, १६ गायत्री; १२ बृहती; १४, १५, २१ पंक्तिः; १७ काकुभः प्रगाथ = (विषमा ककुप्, समा सतो बृहती); १८, २२ उष्णिक्; १९, २३ अनुष्टुप्; २० त्रिष्टुप् ॥

सूक्तं (१)

१. गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः ।
त्वꣳ सुवीरो असि सोम विश्वविक्तं त्वा नर उप गिरेम आसते ॥ ९५५ ॥ २.६.१.१

२. त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि ।
स नः पवस्व वसुमद्धिरण्यवद्वयꣳ स्याम भुवनेषु जीवसे ॥ ९५६ ॥ २.६.१.२

३. ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः ।
तास्ते क्षरन्तु मधुमद्धृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ ९५७ ॥ ॥१ (खी)॥ २.६.१.३

[धा॰ ४१ । उ॰ २ । स्व॰ ४ ।]

## सूक्तं (२)

१. पवमानस्य विश्वविन्प्र ते सर्गा असृक्षत ।
सूर्यस्येव न रश्मयः ॥ ९५८ ॥ २.६.१.४

२. केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि ।
समुद्रः सोम पिन्वसे ॥ ९५९॥ २.६.१.५

३. जज्ञानो वाचमिष्यसि पवमान विधर्मणि ।
क्रन्दं देवो न सूर्यः ॥ ९६० ॥ ॥२ (पा)॥ २.६.१.६

[धा॰ १५ । उ॰ १ । स्व॰ २ ।]

## सूक्तं (३)

१. प्र सोमासो अधन्विषुः पवमानास इन्दवः ।
श्रीणाना अप्सु वृञ्जते ॥ ९६१ ॥ २.६.१.७

२. अभि गावो अधन्विषुरापो न प्रवता यतीः ।
पुनाना इन्द्रमाशत ॥ ९६२ ॥ २.६.१.८

३. प्र पवमान धन्वसि सोमेन्द्राय मादनः ।
नृभिर्यतो वि नीयसे ॥ ९६३ ॥ २.६.१.९

४. इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे ।
अरमिन्द्रस्य धाम्ने ॥ ९६४ ॥ २.६.१.१०

५. त्वꣳ सोम नृमादनः पवस्व चर्षणीधृतिः ।
सस्निर्यो अनुमाद्यः ॥ ९६५ ॥ २.६.१.११

६. पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः ।
शुचिः पावको अद्भुतः ॥ ९६६ ॥ २.६.१.१२

७. शुचिः पावक उच्यते सोमः सुतः स मधुमान् ।
देवावीरघशꣳसहा ॥ ९६७ ॥ ॥३ (है)॥ २.६.१.१३

[धा° ४१ । उ° नास्ति | स्व° ८ ॥]]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (४)

१. प्र कविर्देववीतयेऽव्या वारेभिरव्यत ।
साह्वान्विश्वा अभि स्पृधः ॥ ९६८ ॥ २.६.२.१

२. स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति ।
पवमानः सहस्रिणम् ॥ ९६९ ॥ २.६.२.२

३. परि विश्वानि चेतसा मृज्यसे पवसे मती ।
स नः सोम श्रवो विदः ॥ ९७० ॥ २.६.२.३

४. अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवꣳ रयिम् ।
इषꣳ स्तोतृभ्य आ भर ॥ ९७१ ॥ २.६.२.४

५. त्वꣳ राजेव सुव्रतो गिरः सोमाविवेशिथ ।
पुनानो वह्ने अद्भुत ॥ ९७२ ॥ २.६.२.५

६. स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः ।
सोमश्चमूषु सीदति ॥ ९७३ ॥ २.६.२.६

७. क्रीडुर्मखो न मꣳहयुः पवित्रꣳ सोम गच्छसि ।
दधत्स्तोत्रे सुवीर्यम् ॥ ९७४ ॥ ॥४ (को)॥ २.६.२.७

[धा° २१ । उ° १ । स्व° ९ ।]

## सूक्तं (५)

१. यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव ।
विश्वा च सोम सौभगा ॥ ९७५ ॥ २.६.२.८

२. इन्दो यथा तव स्तवो यथा ते जातमन्धसः ।
नि बर्हिषि प्रिये सदः ॥ ९७६ ॥ २.६.२.९

३. उत नो गोविदश्ववित्पवस्व सोमान्धसा ।
मक्षूतमेभिरहभिः ॥ ९७७ ॥ २.६.२.१०

४. यो जिनाति न जीयते हन्ति शत्रुमभीत्य ।
स पवस्व सहस्रजित् ॥ ९७८ ॥ ॥५ (हि)॥ २.६.२.११

[धा° ११ । उ° नास्ति । स्व° ३ ।]

## सूक्तं (६)

१. यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये ।
ताभिः पवित्रमासदः ॥ ९७९ ॥ २.५.२.१२

२. सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया ।
सीदन्नृतस्य योनिमा ॥ ९८० ॥ २.६.२.१३

३. त्वꣳ सोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः ।
वरिवोविद्धृतं पयः ॥ ९८१ ॥ ॥६ (हि)॥ २.६.२.१४

[धा० ११ । उ० नास्ति | स्व० ३ ॥]]

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (७)

१. तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र उषसामिवेतयः ।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥ ९८२ ॥ २.६.३.१

२. वातोपजूत इषितो वशाꣳअनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
आ ते यतन्ते रथ्यो३ यथा पृथक्शर्धाꣳस्यग्ने अजरस्य धक्षतः ॥ ९८३ ॥ २.६.३.२

३. मेधाकारं विदथस्य प्रसाधनमग्निꣳहोतारं परिभूतरं मतिम् ।
त्वामर्भस्य हविषः समानमित्वां महो वृणते नान्यं त्वत् ॥ ९८४ ॥ ॥७ (वु ॥ २.६.३.३

[धा० ३५ । उ ३ । स्व० ५।]

## सूक्तं (८)

१. पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण ।
मित्र वꣳसि वाꣳसुमतिम् ॥ ९८५ ॥ २.६.३.४

२. ता वा॑ सम्यगद्रुह्वाणेषमश्याम धाम च ।
वयं वां मित्रा स्याम ॥ ९८६ ॥ २.६.३.५

३. पातं नो मित्रा पायुभिरुत त्रायेथा॑सुत्रात्रा ।
साह्याम दस्यूं तनूभिः ॥ ९८७ ॥ ॥८ (य)॥ २.६.३.६

[धा° १२ । उ° नास्ति । स्व° १।]

## सूक्तं (९)

१. उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः ।
सोममिन्द्र चमू सुतम् ॥ ९८८ ॥ २.६.३.७

२. अनु त्वा रोदसी उभे स्पर्धमानमददेताम् ।
इन्द्र यद्दस्युहाभवः ॥ ९८९ ॥ २.६.३.८

३. वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् ।
इन्द्रात्परितन्वं ममे ॥ ९९० ॥ ॥९ (ही)॥ २.६.३.९

[धा° ११ । उ° नास्ति । स्व° ४ ।]

## सूक्तं (१०)

१. इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत ।
पिबत॑ शम्भुवा सुतम् ॥ ९९१ ॥ २.६.३.१०

२. या वा॑सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
इन्द्राग्नी ताभिरा गतम् ॥ ९९२ ॥ २.६.३.११

३. ताभिरा गच्छतं नरोपेद२ँसवन२ँसुतम् ।
इन्द्राग्नी सोमपीतये ॥ ९९३ ॥ ॥१० (हा)॥ २.६.३.१२

[धा° ११ । उ° नास्ति | स्व° ३ ॥]]

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (११)

१. अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् ।
सीदन्योनौ वनेष्वा ॥ ९९४ ॥ २.६.४.१

२. अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
सोमा अर्षन्तु विष्णवे ॥ ९९५ ॥ २.६.४.२

३. इषं तोकाय नो दधदस्मभ्य२ँ सोम विश्वतः ।
आ पवस्व सहस्रिणम् ॥ ९९६ ॥ ॥११ (ला) ॥ २.६.४.३

[धा° १४ । उ° नास्ति । स्व° २ ।]

## सूक्तं (१२)

१. सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ९९७ ॥ २.६.४.४

२. अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ ९९८ ॥ ॥१२ (फ)॥ २.६.४.५

[धा° १५ । उ° २ । स्व° १ ।]

## सूक्तं (१३)

१. यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु ।
तन्नः पुनान आ भर ॥ ९९९ ॥ २.६.४.६

२. वृषा पुनान आयूꣳषि स्तनयन्नधि बर्हिषि ।
हरिः सन्योनिमासदः ॥ १००० ॥ २.६.४.७

३. युवꣳ हि स्थः स्वःपती इन्द्रश्च सोम गोपती ।
ईशाना पिप्यतं धियः ॥ १००१ ॥ ॥१३ (पु)॥ २.६.४.८

[धा° १५ । उ° १ | स्व° ५ ॥]]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१४)

१. इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १००२ ॥ २.६.५.१

२. असि हि वीर सेन्योऽसि भूरि परादिदः ।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ १००३ ॥ २.६.५.२

३. यदुदीरत आजयोः (धृष्णवे धीयते धनाम् ।
युङ्क्ष्वा मदच्युता हरी कꣳ हनः कꣳ वसौ दधोऽस्माꣳ इन्द्र वसौ दधः )* ॥ १००४ ॥
॥१४ (खु)॥ २.६.५.३

[धा° २६ । उ° २ । स्व° ५ ।]

## सूक्तं (१५)

१. स्वादोरित्था विषूवतो (मध्वः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥)* ॥ १००५ ॥ २.६.५.४

२. ता अस्य पृशनायुवः सोम॰ श्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्र॰ हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ १००६ ॥ २.६.५.५

३. ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १००७ ॥ ॥१५ (व)॥ २.६.५.६

[धा॰ १५ । उ॰ नास्ति | स्व॰ १ ॥]]

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (१६)

१. असाव्य॰शुर्मदायाप्सु दक्षो गिरिष्ठाः ।
श्येनो न योनिमासदत् ॥ १००८ ॥ २.६.६.१

२. शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम् ।
स्वदन्ति गावः पयोभिः ॥ १००९ ॥ २.६.६.२

३. आदीमश्वं न हेतारमशूशुभन्नमृताय ।
मधो रस॰ सधमादे ॥ १०१० ॥ ॥१६ (चु)॥ २.६.६.३

[धा॰ १२ । उ॰ १ । स्व॰ ५ ।]

## सूक्तं (१७)

१. अभि द्युम्नं बृहद्यश इषस्पते दीदिहि देव देवयुम् ।
वि कोशं मध्यमं युव ॥ १०११ ॥ २.६.६.४

२. आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः ।
वृष्टिं दिवः पवस्व रीतिमपो जिन्वन्गविष्टये धियः ॥ १०१२ ॥ ॥१७ (डा)॥ २.६.६.५

[धा° १८ । उ° ३ । स्व° २ ।]

## सूक्तं (१८)

१. प्राणा शिशुर्महीनाꣳ हिन्वन्नृतस्य दीधितिम्।
विश्वा परि प्रिया भुवदध द्विता ॥ १०१३ ॥ २.६.६.६

२. उप त्रितस्य पाष्योऽभक्त यद्गुहा पदम् ।
यज्ञस्य सप्त धामभिरध प्रियम् ॥ १०१४ ॥ २.६.६.७

३. त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम् ।
मिमीते अस्य योजना वि सुक्रतुः ॥ १०१५ ॥ ॥१८ (री)॥ २.६.६.८

[धा° ८ । उ° नास्ति । स्व° ४ । ]

## सूक्तं (१९)

१. पवस्व वाजसातये पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥ १०१६ ॥ २.६.६.९

२. त्वा३ रिहन्ति धीतयो हरिं पवित्रे अद्रुहः ।
वत्सं जातं न मातरः पवमान विधर्मणि ॥ १०१७ ॥ २.६.६.१०

३. त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥ १०१८ ॥ ॥१९ (फू)॥ २.६.६.११

[धा० २४ । उ० १ । स्व० २ ।]

## सूक्तं (२०)

१. इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ १०१९ ॥ २.६.६.१२

२. अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ १०२० ॥ २.६.६.१३

३. अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् ।
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ १०२१ ॥ ॥२० (पी)॥ २.६.६.१४

[धा० २० । उ० १ | स्व० ४ ॥]]

इति षष्ठः खण्डः ॥ ६ ॥

## सूक्तं (२१)

१. आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीष३ स्तोतृभ्य आ भर ॥ १०२२ ॥ २.६.७.१

२. आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आ भर ॥ १०२३ ॥ २.६.७.२

३. ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर ॥ १०२४ ॥ ॥२१ (रा)॥ २.६.७.३

[धा॰ २८ । उ॰ नास्ति । स्व॰ २ ।]

## सूक्तं (२२)

१. इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥ १०२५ ॥ २.६.७.४

२. त्वमिन्द्राभिभूरसि त्वꣳ सूर्यमरोचयः ।
विश्वकर्मा विश्वदेवो महाꣳ असि ॥ १०२६ ॥ २.६.७.५

३. विभ्राजं ज्योतिषा स्व३रगच्छो रोचनं दिवः ।
देवास्त इन्द्र सख्याय येमिरे ॥ १०२७ ॥ ॥२२ (व)॥ २.६.७.६

[धा॰ १५ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (२३)

१. असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यो न रश्मिभिः ॥ १०२८ ॥ २.६.७.७

२. आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥ १०२९ ॥ २.६.७.८

३. इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
ऋषीणा२ सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥ १०३० ॥ ॥२३ (पा)॥ २.६.७.९

[धा° १० । उ° १ | स्व° २ ॥]

इति सप्तमः खण्डः ॥ ७ ॥

इति तृतीयप्रपाठके द्वितीयोऽर्धः ॥ ३ ॥

तृतीयप्रपाठकश्च समाप्तः ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

# अथ सप्तमोऽध्यायः ॥

अथ चतुर्थप्रपाठके प्रथमोऽर्धः ॥ ४-१ ॥

(१-२४) १ (अकृष्टमाषदयः) त्रयः; २, ११ कश्यपो मारीचः; ३ मेदातिथिः काण्वः; ४ हिरण्यस्तूप आङ्गिरसः; ५ अवत्सारः काश्यपः; ६ जमदग्निर्भार्गवः; ७, २१ कुत्स आङ्गिरसः; ८ वसिष्ठो मैत्रावरुणिः; ९ त्रिशोकः काण्वः; १० श्यावाश्व आत्रेयः; १२ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); १३ अमहीयुरांगिरसः; १४ शुनःशेप आजीगर्तिः; १५ मधुच्छन्दा वैश्वामित्रः; १६ (१, ३ २-पूर्वार्धः ) मान्धाता यौवनाश्वः;१६ (२ उत्तरार्धः) गोधा ऋषिका १७ असितः काश्यपो देवलो वा; १८ (१) ऋणंचयो राजर्षिः; १८ (२) शक्तिर्वासिष्ठः; १९ पर्वतनारदौ काण्वौ; २० मनुः सांवरणः ; २२ बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा; २३ भुवन अप्त्यः साधनो वा भौवनः ॥ १-६, ११-१३, १७-२१ पवमानः सोमः; ७, २२ अग्निः; ८ आदित्यः; ९, १४-१६ इन्द्रः; १० इन्द्राग्नी; २३ विश्वे देवाः; २४ ॥ १, ७ जगती; २-६, ८-११, १३-१५, १७ गायत्री; १२ प्रगाथः = (विषमा बृहती, समा सतोबृहती); १६ महपंक्तिः; १८ (१) यवमध्या गायत्री; १८ (२) सतो बृहती १९ उष्णिक्; २० अनुष्टुप्; २१ त्रिष्टुप्;
२२ द्विपदा विराट्; २३ द्विपदा त्रिष्टुप्; २४ ॥

सूक्तं (१)

१. ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसु ।
दधाति रत्नꣳ स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥ १०३१ ॥ २.७.१.१

२. अभिक्रन्दन्कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः ।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥ १०३२ ॥ २.७.१.२

३. अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि ।
अग्रे वाजस्य भजसे महद्धनꣳ स्वायुधः सोतृभिः सोम सूयसे ॥ १०३३ ॥ ॥२ (लु)॥ २.७.१.३

[धा॰ २९ । उ॰ नास्ति । स्व॰ ५ ।]

## सूक्तं (२)

१. असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
शुक्रासो वीरयाशवः ॥ १०३४ ॥ २.७.१.४

२. शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः ।
पवन्ते वारे अव्यये ॥ १०३५॥ २.७.१.५

३. ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा ।
पवन्तामान्तरिक्ष्या ॥ १०३६ ॥ ॥२ (वी)॥ २.७.१.६

[धा॰ २० । उ॰ नास्ति । स्व॰ ४ ।]

## सूक्तं (३)

१. पवस्व देववीरति पवित्रꣳ सोम रꣳह्या ।
इन्द्रमिन्दो वृषा विश ॥ १०३७ ॥ २.७.१.७

२. आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः ।
आ योनिं धर्णसिः सदः ॥ १०३८ ॥ २.७.१.८

३. अधुक्षत प्रियं मधु धारा सुतस्य वेधसः ।
अपो वसिष्ट सुक्रतुः ॥ १०३९ ॥ २.७.१.९

४. महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः ।
यद्गोभिर्वासयिष्यसे ॥ १०४० ॥ २.७.१.१०

५. समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः ।
सोमः पवित्रे अस्मयुः ॥ १०४१ ॥ २.७.१.११

६. अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
सं॰ सूर्येण दिद्युते ॥ १०४२ ॥ २.७.१.१२

७. गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः ।
याभिर्मदाय शुम्भसे ॥ १०४३ ॥ २.७.१.१३

८. तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे ।
तव प्रशस्तये महे ॥ १०४४ ॥ २.७.१.१४

९. गोषा इन्दो नृषा अस्यश्वसा वाजसा उत ।
आत्मा यज्ञस्य पूर्व्यः ॥ १०४५ ॥ २.७.१.१४

१०. अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।
पर्जन्यो वृष्टिमा॰इव ॥ १०४६ ॥ ॥३ (कै)॥ २.७.१.१६

[धा॰ ५१ । उ॰ १ | स्व॰ ८ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (४)

१. सना च सोम जेषि च पवमान महि श्रवः ।
अथा नो वस्यसस्कृधि ॥ १०४७ ॥ २.७.२.१

२. सना ज्योतिः सना स्व३र्विश्वा च सोम सौभगा ।
अथा नो वस्यसस्कृधि ॥ १०४८ ॥ २.७.२.२

३. सना दक्षमुत क्रतुमप सोम मृधो जहि ।
अथा नो वस्यसस्कृधि ॥ १०४९ ॥ २.७.२.३

४. पवीतारः पुनीतन सोममिन्द्राय पातवे ।
अथा नो वस्यसस्कृधि ॥ १०५० ॥ २.७.२.४

५. त्वꣳसूर्ये न आ भज तव क्रत्वा तवोतिभिः ।
अथा नो वस्यसस्कृधि ॥ १०५१ ॥ २.७.२.५

६. तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम् ।
अथा नो वस्यसस्कृधि ॥ १०५२ ॥ २.७.२.६

७. अभ्यर्ष स्वायुध सोम द्विबर्हसꣳ रयिम् ।
अथा नो वस्यसस्कृधि ॥ १०५३ ॥ २.७.२.७

८. अभ्य३र्षानपच्युतो वाजिन्त्समत्सु सासहिः ।
अथा नो वस्यसस्कृधि ॥ १०५४ ॥ २.७.२.८

९. त्वां यज्ञैरवीवृधन्पवमान विधर्मणि ।
अथा नो वस्यसस्कृधि ॥ १०५५ ॥ २.७.२.९

१०. रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर ।
अथा नो वस्यसस्कृधि ॥ १०५६ ॥ ॥४ (चा)॥ २.७.२.१०

[धा० २२ । उ० १ । स्व० २ ।

सूक्तं (५)

२३ २ ३ १ २ ३ १ २ ३१ २र
१. तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
२३ २ ३ १ २
तरत्स मन्दी धावति ॥ १०५७ ॥ २.७.२.११

३ १ २३ १ २ ३ १ २ ३ १ २
२. उस्रा वेद वसूनां मर्त्तस्य देव्यवसः ।
२३ २ ३ १ २
तरत्स मन्दी धावति ॥ १०५८ ॥ २.७.२.१२

३ १ २ ३ २ ३ २ ३ १ २
३. ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे ।
२३ २ ३ १ २
तरत्स मन्दी धावति ॥ १०५९ ॥ २.७.२.१३

१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
४. आ ययोस्त्रिꣳशतं तना सहस्राणि च दद्महे ।
२३ २ ३ १ २
तरत्स मन्दी धावति ॥ १०६० ॥ ॥५ (हा)॥ २.७.२.१४

[धा॰ १५ । उ॰ नास्ति । स्व॰ ३ ।]

## सूक्तं (६)

३ १ २र ३ १ २र ३ २
१. एते सोमा असृक्षत गृणानाः शवसे महे ।
३ १ २ ३ १ २
मदिन्तमस्य धारया ॥ १०६१ ॥ २.७.२.१५

३ १ २र ३ १ २ ३ १ २ ३ १ २
२. अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि ।
३ १ २ ३ १ २
सनद्वाजः परि स्रव ॥ १०६२ ॥ २.७.२.१६

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
३. उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः ।
३ २ ३ १ २
गृणानो जमदग्निना ॥ १०६३ ॥ ॥६ (वि)॥ २.७.२.१७

[धा॰ १५ । उ॰ नास्ति । स्व॰ ३ ।]

## सूक्तं (७)

१. इम॰ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य स॰सद्यग्ने सख्ये मा रिषामा वयं तव ॥ १०६४ ॥ २.७.२.१८

२. भरामेध्मं कृणवामा हवी॰षि ते चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतरा॰ साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ १०६५ ॥ २.७.२.१९

३. शकेम त्वा समिध॰ साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्या॰ आ वह तान्ह्यू३श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ १०६६ ॥ ॥७ (छौ)॥
२.७.२.२०

[धा॰ ३६ । उ॰ २ | स्व॰ १० ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (८)

१. प्रति वा॰सूर उदिते मित्रं गृणीषे वरुणम् ।
अर्यमण॰ रिशादसम् ॥ १०६७ ॥ २.७.३.१

२. राया हिरण्यया मतिरियमवृकाय शवसे ।
इयं विप्रा मेधसातये ॥ १०६८ ॥ २.७.३.२

३. ते स्याम देव वरुण ते मित्र सूरिभिः सह।
इष॰स्वश्च धीमहि ॥ १०६९ ॥ ॥८ (हा)॥ २.७.३.३

[धा॰ ११ । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (९)

१. भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।
वसु स्पार्हं तदा भर ॥ १०७० ॥ २.७.३.४

२. यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति ।
वसु स्पार्हं तदा भर ॥ १०७१॥ २.७.३.५

३. यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।
वसु स्पार्हं तदा भर ॥ १०७२ ॥ ॥९ (चू)॥ २.७.३.६

[धा॰ १२ । उ॰ १ | स्व॰ ६ ॥]

सूक्तं (१०)

१. यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु ।
इन्द्राग्नी तस्य बोधतम् ॥ १०७३ ॥ २.७.३.७

२. तोशासा रथयावाना वृत्रहणापराजिता ।
इन्द्राग्नी तस्य बोधतम् ॥ १०७४ ॥ २.७.३.८

३. इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः ।
इन्द्राग्नी तस्य बोधतम् ॥ १०७५ ॥ ॥१० (टा)॥ २.७.३.९

[धा॰ ८ । उ॰ १ | स्व॰ २ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (११)

१. इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
अर्कस्य योनिमासदम् ॥ १०७६ ॥ २.७.४.१

२. तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् ।
सं त्वा मृजन्त्यायवः ॥ १०७७ ॥ २.७.४.२

३. रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे ।
पवमानस्य मरुतः ॥ १०७८ ॥ ॥१ (ल)॥ २.७.४.३

[धा॰ १४ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (१२)

१. मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ १०७९ ॥ २.७.४.४

२. पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
देवानाꣳसोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ १०८० ॥ ॥१२ (ति)॥ २.७.४.५

[धा॰ २४ । उ॰ १ । स्व॰ ३ ।]

## सूक्तं (१३)

१. एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् ।
समादित्येभिरख्यत ॥ १०८१ ॥ २.७.४.६

२. समिन्द्रेणोत वायुना सुत एति पवित्र आ ।
सꣳ सूर्यस्य रश्मिभिः ॥ १०८२ ॥ २.७.४.७

३. स नो भगाय वायवे पूष्णे पवस्व मधुमान् ।
चारुर्मित्रे वरुणे च ॥ १०८३ ॥ ॥१३ (टि)॥ २.७.४.८

[धा॰ ८ । उ॰ १ | स्व॰ ३ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१४)

१. रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ॥ १०८४ ॥ २.७.५.१

२. आ घ त्वावां त्मना युक्तः स्तोतृभ्यो धृष्णवीयानः ।
ऋणोरक्षं न चक्रयोः ॥२ ॥ ॥ १०८५ ॥ २.७.५.२

३. आ यद्दुवः शतक्रतवा कामं जरितॄणाम् ।
ऋणोरक्षं न शचीभिः ॥ १०८६ ॥ ॥१४ (ठी)॥ २.७.५.३

[धा॰ ११८ । उ॰ २ । स्व॰ ४ ।]

## सूक्तं (१५)

१. सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यविद्यवि ॥ १०८७ ॥ २.७.५.४

२. उप नः सवना गहि सोमस्य सोमपाः पिब ।
गोदा इद्रेवतो मदः ॥ १०८८ ॥ २.७.५.५

३. अथा ते अन्तमानां विद्याम सुमतीनाम् ।
मा नो अति ख्य आ गहि ॥ १०८९ ॥ ॥१५ (कौ)॥ २.७.५.६

[धा० ११ । उ० १ । स्व० नास्ति ]

सूक्तं (१६)

१. उभे यदिन्द्र रोदसी आपप्राथोषा इव।
महान्तं त्वा महीना३ सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १०९० ॥ २.७.५.७

२. दीर्घ३ ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः ।
पूर्वेण मघवन्पदा वयामजो यथा यमः ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥२ ॥ ॥ १०९१ ॥ २.७.५.८

३. अव स्म दुर्हृणायतो मर्त्तस्य तनुहि स्थिरम् ।
अधस्पदं तमीं कृधि यो अस्मा३ अभिदासति ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १०९२ ॥ ॥१६ (यौ)॥ २.७.५.९

[धा० ४२ । उ० ना | स्व० १० ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

सूक्तं (१७)

१. परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
मदेषु सर्वधा असि ॥ १०९३ ॥ २.७.६.१

२. त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः ।
मदेषु सर्वधा असि ॥ १०९४ ॥ २.७.६.२

३. त्वे विश्वे सजोषसो देवासः पीतिमाशत ।
मदेषु सर्वधा असि ॥ १०९५ ॥ ॥१७ (खा)॥ २.७.६.३

[धा॰ ११ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (१८)

१. स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
सोमो यः सुक्षितीनाम् ॥ १०९६ ॥ २.७.६.४

२. यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥ १०९७ ॥ ॥१८ (ली)॥ २.७.६.५

## (१९)

१. तं वः सखायो मदाय पुनानमभि गायत ।
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ १०९८ ॥ २.७.६.६

२. सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते ।
देवावीर्मदो मतिभिः परिष्कृतः ॥ १०९९ ॥ २.७.६.७

३. अयं दक्षाय साधनोऽयं शर्धाय वीतये ।
अयं देवेभ्यो मधुमत्तरः सुतः ॥ ११०० ॥ ॥१९ (यि)॥ २.७.६.८

[धा॰ १७ । उ॰ नास्ति । स्व॰ ३ ।]

## सूक्तं (२०)

१. सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ११०१ ॥ २.७.६.९

२. ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ ११०२ ॥ २.७.६.१०

३. सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ११०३ ॥ ॥२० (वा)॥ २.७.६.११

[धा° १० । उ° नास्ति । स्व° २ ।]

## सूक्तं (२१)

१. अया पवा पवस्वैना वसूनि माꣳश्वत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ११०४ ॥ २.७.६.१२

२. उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।
षष्टिꣳ सहस्रा नैगुतो वसूनि वृक्षं न पक्कं धूनवद्रणाय ॥ ११०५ ॥ २.७.६.१३

३. महीमे अस्य वृष नाम शूषे माꣳश्वत्वे वा पृशने वा वधत्रे ।
अस्वापयन्निगुतः स्नेहयच्चापामित्राꣳ अपाचितो अचेतः ॥ ११०६ ॥ ॥२१ (कि)॥ २.७.६.१४

इति षष्ठः खण्डः ॥ ६ ॥

[धा° १६ । उ° १ | स्व° ३ ॥]

## सूक्तं (२२)

१. अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ ११०७ ॥ २.७.७.१

२. वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ ११०८ ॥ २.७.७.२

३. तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ११०९ ॥ ॥२२ (वा)॥ २.७.७.३

[धा॰ १५ । उ॰ नास्ति । स्व॰ २ ।]

## सूक्तं (२३)

१. इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ १११० ॥ २.७.७.४

२. यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥ ११११ ॥ २.७.७.५

३. आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ॥ १११२ ॥ ॥२३ (छा)॥ २.७.७.६

[धा॰ १२ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (२४)

१. प्र वोऽर्चोप (प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥)* ॥ १११३ ॥ २.७.७.७

२. प्र वोऽर्चोप (अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥)* ॥ १११४ ॥ २.७.७.८

३. प्र वोऽर्चोप (उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥)* ॥ १११५ ॥ ॥२४ (य)॥ २.७.७.९

[धा॰ २ । उ॰ नास्ति | स्व॰ १ ॥]

इति सप्तमः खण्डः ॥ ७ ॥

इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः ॥ ७ ॥

इति सप्तमोऽध्यायः ॥ ७॥

# अथ अष्टमोऽध्यायः ॥

अथ चतुर्थप्रपाठके द्वितीयोऽर्धः ॥ ४-२ ॥

(१-१४ ) १ (१-३) वृषगणो वासिष्ठः; १ (४-१२), २ (१-९) असितः काश्यपो देवलो वा; २ (१०-१२), ११ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ३, ६ भरद्वाजो बार्हस्पत्यः; ४ यजत आत्रेयः ५ मधुच्छन्दा वैश्वामित्रः; ७ सिकता निवावरी; ८ पुरुहन्मा आंगिरसः; ९ पर्वतनारदौ काण्वौ शिखण्डिन्यावप्सरसौ काश्यपौ वा; १० अग्नये धिष्णयो ऐश्वराः; १२ वत्सः काण्वः; १३ नृमेध आंगिरसः; १४ अत्रिर्भौमः ॥ १-२, ७, ९-११ पवमानः सोमः ; ३, १२ अग्निः; ४ मित्रावरुणौ; ५, ८, १३-१४ इन्द्रः; ७ इन्द्राग्नी ॥ (१-३) त्रिष्टुप्; १ (४-१२), २, ४-६, ११-१२ गायत्री; ७ जगती; ८ प्रगाथः = (विषमा बृहती, समा सतो बृहती); ९ उष्णिक्; १० द्विपदा विराट्; १३ (१-२) ककुप्; १३ (३) पुर उष्णिक् ; १४ अनुष्टुप् ॥

सूक्तं (१)

१. प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ १११६ ॥ २.८.१.१

२. प्र हꣳसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः ।
आङ्गोषिणं पवमानꣳ सखायो दुर्मर्षं वाणं प्र वदन्ति साकम् ॥ १११७ ॥ २.८.१.२

३. स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं मिमते न गावः ।
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥ १११८ ॥ २.८.१.३

४. प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः ।
सोमासो राये अक्रमुः ॥ १११९ ॥ २.८.१.४

५. हिन्वानासो रथा इव दधन्विरे गभस्त्योः ।
भरासः कारिणामिव ॥ ११२०॥ २.८.१.५

६. राजानो न प्रशस्तिभिः सोमासो गोभिरञ्ज ते ।
यज्ञो न सप्त धातृभिः ॥ ११२१ ॥ २.८.१.६

७. परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
मधो अर्षन्ति धारया ॥ ११२२ ॥ २.८.१.७

८. आपानासो विवस्वतो जिन्वन्त उषसो भगम् ।
सूरा अण्वं वि तन्वते ॥ ११२३ ॥ २.८.१.८

९. अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः ।
वृष्णो हरस आयवः ॥ ११२४ ॥ २.८.१.९

१०. समीचीनास आशत होतारः सप्तजानयः ।
पदमेकस्य पिप्रतः ॥ ११२५ ॥ २.८.१.१०

११. नाभा नाभिं न आ ददे चक्षुषा सूर्यं दृशे ।
कवेरपत्यमा दुहे ॥ ११२६ ॥ २.८.१.११

१२. अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् ।
सूरः पश्यति चक्षसा ॥ ११२७ ॥ ॥१ (झै)॥ २.८.१.१२

[धा° ५३ । उ° ४ | स्व° ८ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (२)

१. असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः ।
विदाना अस्य योजना ॥ ११२८ ॥ २.८.२.१

२. प्र धारा मधो अग्रियो महीरपो वि गाहते ।
हविर्हविःषु वन्द्यः ॥ ११२९ ॥ २.८.२.२

३. प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने ।
सद्माभि सत्यो अध्वरः ॥ ११३० ॥ २.८.२.३

४. परि यत्काव्या कविर्नृम्णा पुनानो अर्षति ।
स्वर्वाजी सिषासति ॥ ११३१ ॥ २.८.२.४

५. पवमानो अभि स्पृधो विशो राजेव सीदति ।
यदीमृण्वन्ति वेधसः ॥ ११३२ ॥ २.८.२.५

६. अव्या वारे परि प्रियो हरिर्वनेषु सीदति ।
रेभो वनुष्यते मती ॥ ११३३ ॥ २.८.२.६

७. स वायुमिन्द्रमश्विना साकं मदेन गच्छति ।
रणा यो अस्य धर्मणा ॥ ११३४ ॥ २.८.२.७

८. आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः ।
विदाना अस्य शक्मभिः ॥ ११३५ ॥ २.८.२.८

९. अस्मभ्यꣳ रोदसी रयिं मध्वो वाजस्य सातये ।
श्रवो वसूनि सञ्जितम् ॥ ११३६ ॥ २.८.२.९

१०. आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।
पान्तमा पुरुस्पृहम् ॥ ११३७ ॥ २.८.२.१०

११. आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम् ।
पान्तमा पुरुस्पृहम् ॥ ११३८ ॥ २.८.२.११

१२. आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा ।
पान्तमा पुरुस्पृहम् ॥ ११३९ ॥ ॥२ (ण)॥ २.८.२.१२

[धा॰ ३८ । उ॰ ५ | स्व॰ ११ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (३)

१. मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कवि॰ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥ ११४० ॥ २.८.३.१

२. त्वां विश्वे अमृतं जायमान॰ शिशुं न देवा अभि सं नवन्ते ।
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदे ॥ ११४१ ॥ २.८.३.२

३. नाभिं यज्ञाना॰ सदन॰ रयीणां महामाहावमभि सं नवन्त ।
वैश्वानर॰ रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥ ११४२ ॥ ॥ ३ (कु)॥ २.८.३.३

[धा॰ १३ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (४)

१. प्र वो मित्राय गायत वरुणाय विपा गिरा ।
महिक्षत्रावृतं बृहत् ॥ ११४३ ॥ २.८.३.४

२. सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च ।
देवा देवेषु प्रशस्ता ॥ ११४४॥ २.८.३.५

३. ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य ।
महि वां क्षत्रं देवेषु ॥ ११४५ ॥ ॥४ (र)॥ २.८.३.६

[धा° १३ । उ° नास्ति । स्व° १ ।]

## सूक्तं (५)

१. इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥ ११४६ ॥ २.८.३.७

२. इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।
उप ब्रह्माणि वाघतः ॥ ११४७ ॥ २.८.३.८

३. इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।
सुते दधिष्व नश्चनः ॥ ११४८ ॥ ॥५ (ही)॥ २.८.३.९

[धा° १६ । उ° नास्ति । स्व° ४ ।]

## सूक्तं (६)

१. तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत् ।
कृष्णा कृणोति जिह्वया ॥ ११४९ ॥ २.८.३.१०

२. य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः ।
द्युम्नाय सुतरा अपः ॥ ११५० ॥ २.८.३.११

३. ता नो वाजवतीरिष आशून्पिपृतमर्वतः ।
एन्द्रमग्निं च वोढवे ॥ ११५१॥ ॥६ (य)॥ २.८.३.१२

[धा॰ ७ । उ॰ नास्ति | स्व॰ १ ॥]



इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (७)

१. प्रो अयासीदिन्दुरिन्द्रस्य निष्कृत सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ११५२ ॥ २.८.४.१

२. प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः ।
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः ॥ ११५३ ॥ २.८.४.२

३. आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा ।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥ ११५४ ॥ ॥७ (ठि)॥ २.८.४.३

[धा॰ २८ । उ॰ २ । स्व॰ ३ ।]

## सूक्तं (८)

१. न किष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ ११५५ ॥ २.८.४.४

२. अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः ॥ ११५६ ॥ ॥८ (ही)॥ २.८.४.५

[धा॰ १३ । उ॰ नास्ति | स्व॰ ४ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥



## सूक्तं (९)

१. सखाय आ नि षीदत पुनानाय प्रगायत ।
शिशुं न यज्ञैः परि भूषत श्रिये ॥ ११५७ ॥ २.८.५.१

२. समी वत्सं न मातृभिः सृजता गयसाधनम् ।
देवाव्यऽ.मदमभि द्विशवसम् ॥ ११५८ ॥ २.८.५.२

३. पुनाता दक्षसाधनं यथा शर्धाय वीतये ।
यथा मित्राय वरुणाय शन्तमम् ॥ ११५९ ॥ ॥९ (पि)॥ २.८.५.३

[धा॰ १५ । उ॰ १ । स्व॰ ३ ।]

## सूक्तं (१०)

१. प्र वाज्यक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम् ॥ ११६० ॥ २.८.५.४

२. स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ ११६१ ॥ २.८.५.५

३. प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ॥ ११६२ ॥ ॥१० (पु)॥ २.८.५.६

[धा॰ १५ । उ॰ १ । स्व॰ ५ ।]

## सूक्तं (११)

१. ये सोमासः परावति ये अर्वावति सुन्विरे ।
ये वादः शर्यणावति ॥ ११६३ ॥ २.८.५.७

२. य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् ।
ये वा जनेषु पञ्चसु ॥ ११६४ ॥ २.८.५.८



३. ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम् ।
स्वाना देवास इन्दवः ॥ ११६५ ॥ ॥११ (चि)॥ २.८.५.९

[धा॰ ७ । उ॰ १ | स्व॰ ३ ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

सूक्तं (१२)

१. आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
अग्ने त्वां कामये गिरा ॥ ११६६ ॥ २.८.६.१

२. पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः ।
समत्सु त्वा हवामहे ॥ ११६७ ॥ २.८.६.२

३. समत्स्वग्निमवसे वाजयन्तो हवामहे ।
वाजेषु चित्रराधसम् ॥ ११६८ ॥ ॥१२ (ठा)॥ २.८.६.३

[धा॰ १३ । उ॰ २ । स्व॰ २ ।]

सूक्तं (१३)

१. त्वं न इन्द्रा भर ओजो नृम्ण९ शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥ ११६९ ॥ २.८.६.४

२. त्व९ हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ।
अथा ते सुम्नमीमहे ॥ ११७० ॥ २.८.६.५

३. त्वा९ शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत ।
स नो रास्व सुवीर्यम् ॥१३ (ल)॥ ॥ ११७१ ॥ ॥१३ (ल)॥ २.८.६.६

[धा° १४ । उ° नास्ति । स्व° १ ।]

सूक्तं (१४)

१. यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ११७२ ॥ २.८.६.७

२. यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ ११७३ ॥ २.८.६.८

३. यत्ते दिक्षु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ॥ ११७४ ॥ ॥१४ (पी)॥ २.८.६.९

[धा° २५ । उ° १ | स्व° ४ ॥]

इति षष्ठः खण्डः ॥६ ॥

इति चतुर्थप्रपाठकस्य द्वितीयोऽर्धः ॥ २ ॥

चतुर्थप्रपाठकश्च समाप्तः ॥ ४ ॥

इति अष्टमोऽध्यायः ॥ ८ ॥

# अथ नवमोऽध्यायः ॥

अथ पञ्चमप्रपाठके प्रथमोऽर्धः ॥ ५-१ ॥

(१-२०) १ प्रतर्दिनो दैवोदासः; २, ३, ४ असितः काश्यपो देवलो वा; ५, ११ उचथ्य आंगिरसः; ६, ७ अमहीयुराङ्गिरसः; ८, १५ निध्रुविः काश्यपः; ९ वसिष्ठो मैत्रावरुणिः; १० सुकक्ष आंगिरसः; १२ कविर्भार्गवः; १३ देवातिथिः काण्वः; १४ भर्गः प्रागाथः; १६ अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च; १७ अग्नये धिष्ण्या ऐश्वराः; १८ उशना काव्यः; १९ नृमेध आंगिरसः; २० जेता माधुच्छन्दसः ॥ १-८, ११-१२, १५-१७ पवमानः सोमः ; ९, १८ अग्निः; १०, १३, १४, १९-२० इन्द्रः ॥ १-९ त्रिष्टुप्; २-८, १०-११, १५, १८ गायत्री; जगती १३, १४ प्रगाथः = (विषमा बृहती, समा सतोबृहती); १६-२० अनुष्टुप् ; १७ द्विपदा विराट्; १९ उष्णिक् ॥

सूक्तं (१)

१. शिशुं जज्ञानꣳ हर्यतं मृजन्ति शुम्भन्ति विप्रं मरुतो गणेन ।
कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥ ११७५ ॥ २.९.१.१

२. ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम् ।
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥ ११७६ ॥ २.९.१.२

३. चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिꣳ सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ ११७७ ॥ ॥१ (लु)॥ २.९.१.३

[धा० २४ । उ० नास्ति । स्व० ५ ।]

सूक्तं (२)

१. एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् ।
वर्धन्तो अस्य वीर्यम् ॥ ११७८ ॥ २.९.१.४

२. पुनानासश्चमूषदो गच्छन्तो वायुमश्विना ।
ते नो धत्त सुवीर्यम् ॥ ११७९॥ २.९.१.५

३. इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय ।
देवानां योनिमासदम् ॥ ११८० ॥ २.९.१.६

४. मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः ।
अनु विप्रा अमादिषुः ॥ ११८१ ॥ २.९.१.७

५. देवेभ्यस्त्वा मदाय कꣳ सृजानमति मेष्यः ।
सं गोभिर्वासयामसि ॥ ११८२ ॥ २.९.१.८

६. पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः ।
परि गव्यान्यव्यत ॥ ११८३ ॥ २.९.१.९

७. मघोन आ पवस्व नो जहि विश्वा अप द्विषः ।
इन्दो सखायमा विश ॥ ११८४ ॥ २.९.१.१०

८. नृचक्षसं त्वा वयमिन्द्रपीतꣳ स्वर्विदम् ।
भक्षीमहि प्रजामिषम् ॥ ११८५ ॥ २.९.१.११

९. वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि ।
सहो नः सोम पृत्सु धाः ॥ ११८६ ॥ ॥२ (ति)॥ २.९.१.१२

[धा॰ ३९ । उ॰ १ | स्व॰ १३ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (३)

१. सोमः पुनानो अर्षति सहस्रधारो अत्यविः ।
वायोरिन्द्रस्य निष्कृतम् ॥ ११८७ ॥ २.९.२.१

२. पवमानमवस्यवो विप्रमभि प्र गायत ।
सुष्वाणं देववीतये ॥ ११८८ ॥ २.९.२.२

३. पवन्ते वाजसातये सोमाः सहस्रपाजसः ।
गृणाना देववीतये ॥ ११८९ ॥ २.९.२.३

४. उत नो वाजसातये पवस्व बृहतीरिषः ।
द्युमदिन्दो सुवीर्यम् ॥ ११९०॥ २.९.२.४

५. अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।
वि वारमव्यमाशवः ॥ ११९१ ॥ २.९.२.५

६. ते नः सहस्रिण९ँ रयिं पवन्तामा सुवीर्यम् ।
स्वाना देवास इन्दवः ॥ ११९२ ॥ २.९.२.६

७. वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः ।
दधन्विरे गभस्त्योः ॥ ११९३ ॥ २.९.२.७

८. जुष्ट इन्द्राय मत्सरः पवमानः कनिक्रदत् ।
विश्वा अप द्विषो जहि ॥ ११९४ ॥ २.९.२.८

९. अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः ।
योनावृतस्य सीदत ॥ ११९५ ॥ ॥ ३ (दू)॥ २.९.२.९

[धा° ३९ । उ° ३ | स्व° ६ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (४)

१. सोमा असृग्रमिन्दवः सुता ऋतस्य धारया ।
इन्द्राय मधुमत्तमाः ॥ ११९६ ॥ २.९.३.१

२. अभि विप्रा अनूषत गावो वत्सं न धेनवः ।
इन्द्रꣳ सोमस्य पीतये ॥ ११९७ ॥ २.९.३.२

३. मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् ।
सोमो गौरी अधि श्रितः ॥ ११९८ ॥ २.९.३.३

४. दिवो नाभा विचक्षणोऽव्या वारे महीयते ।
सोमो यः सुक्रतुः कविः ॥ ११९९ ॥ २.९.३.४

५. यः सोमः कलशेष्वा अन्तः पवित्र आहितः ।
तमिन्दुः परि षस्वजे ॥ १२००॥ २.९.३.५

६. प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि ।
जिन्वन्कोशं मधुश्चुतम् ॥ १२०१ ॥ २.९.३.६

७. नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम् ।
हिन्वानो मानुषा युजा ॥ १२०२ ॥ २.९.३.७

८. आ पवमान धारय रयिं सहस्रवर्चसम् ।
अस्मे इन्दो स्वाभुवम् ॥ १२०३ ॥ २.९.३.८

९. अभि प्रिया दिवः कविर्विप्रः स धारया सुतः ।
सोमो हिन्वे परावति ॥ १२०४ ॥ ॥४ (भे)॥ २.९.३.९

[धा॰ ४० । उ॰ ४ | स्व॰ ७ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (५)

१. उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः ।
वाणस्य चोदया पविम् ॥ १२०५ ॥ २.९.४.१

२. प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।
यदव्य एषि सानवि ॥ १२०६ ॥ २.९.४.२

३. अव्या वारैः परि प्रियं हरिं हिन्वन्त्यद्रिभिः ।
पवमानं मधुश्चुतम् ॥ १२०७ ॥ २.९.४.३

४. आ पवस्व मदिन्तम पवित्रं धारया कवे ।
अर्कस्य योनिमासदम् ॥ १२०८ ॥ २.९.४.४

५. स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः ।
एन्द्रस्य जठरं विश ॥ १२०९ ॥ ॥५ (का)॥ २.९.४.५

[धा॰ ३१ उ॰ १ स्व॰ २ ।]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (६)

१. अया वीती परि स्रव यस्त इन्दो मदेष्वा ।
अवाहन्नवतीर्नव ॥ १२१० ॥ २.९.५.१

२. पुरः सद्य इत्थाधिये दिवोदासाय शंबरम् ।
अध त्यं तुर्वशं यदुम् ॥ १२११ ॥ २.९.५.२

३. परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।
क्षरा सहस्रिणीरिषः ॥ १२१२ ॥ ॥६ (हि)॥ २.९.५.३

[धा० ११ । उ० नास्ति । स्व० ३।]

## सूक्तं (७)

१. अपघ्नन्पवते मृधोऽप सोमो अराव्णः ।
गच्छन्निन्द्रस्य निष्कृतम् ॥ १२१३ ॥ २.९.५.४

२. महो नो राय आ भर पवमान जही मृधः ।
रास्वेन्दो वीरवद्यशः ॥ १२१४ ॥ २.९.५.५

३. न त्वा शतं च न ह्रुतो राधो दित्सन्तमा मिनन् ।
यत्पुनानो मखस्यसे ॥ १२१५ ॥ ॥७ (खा)॥ २.९.५.६

[धा० ११ । उ० २ । स्व० २ ।]

## सूक्तं (८)

१. अया पवस्व धारया यया सूर्यमरोचयः ।
हिन्वानो मानुषीरपः ॥ १२१६ ॥ २.९.५.७

२. अयुक्त सूर एतशं पवमानो मनावधि ।
अन्तरिक्षेण यातवे ॥ १२१७ ॥ २.९.५.८

३. उत त्या हरितो रथे सूरो अयुक्त यातवे ।
इन्दुरिन्द्र इति ब्रुवन् ॥ १२१८ ॥ ॥८ (का)॥ २.९.५.९

[धा॰ ११ । उ॰ १ | स्व॰ १ ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (९)

१. अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ १२१९ ॥ २.९.६.१

२. प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ १२२० ॥ २.९.६.२

३. उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः ।
अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ॥ १२२१ ॥ ॥९ (टी)॥ २.९.६.३

[धा॰ १८ । उ॰ १ । स्व॰ ४ ।]

सूक्तं (१०)

१. तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।
स वृषा वृषभो भुवत् ॥ १२२२ ॥ २.९.६.४

२. इन्द्रः स दामने कृत ओजिष्ठः स बले हितः ।
द्युम्नी श्लोकी स सोम्यः ॥ १२२३ ॥ २.९.६.५

३. गिरा वज्रो न सम्भृतः सबलो अनपच्युतः ।
ववक्ष उग्रो अस्तृतः ॥ १२२४ ॥ ॥१० (छे)॥ २.९.६.६

[धा॰ १७ । उ २ । स्व॰ ७।]

इति षष्ठः खण्डः ॥६ ॥

सूक्तं (११)

१. अध्वर्यो अद्रिभिः सुत॰सोमं पवित्र आ नय ।
पुनाहीन्द्राय पातवे ॥ १२२५ ॥ २.९.७.१

२. तव त्य इन्दो अन्धसो देवा मधोर्व्याशत ।
पवमानस्य मरुतः ॥ १२२६ ॥ २.९.७.२

३. दिवः पीयूषमुत्तम॰ सोममिन्द्राय वज्रिणे ।
सुनोता मधुमत्तमम् ॥ १२२७ ॥ ॥११ (खा)॥ २.९.७.३

[धा॰ ११ । उ॰ २ । स्व॰ २ ।]

सूक्तं (१२)

१. धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजा॑सि कृणुषे नदीष्वा ॥ १२२८ ॥ २.९.७.४

२. शूरो न धत्त आयुधा गभस्त्योः स्व३ सिषासन्नथिरो गविष्टिषु ।
इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ १२२९॥ २.९.७.५

३. इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।
प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजा॑ उप माहि शश्वतः ॥ १२३० ॥ ॥१२ (चा)॥
२.९.७.६

[धा० २७ । उ० १ । स्व० २ । ]

सूक्तं (१३)

१. यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १२३१ ॥ २.९.७.७

२. यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥ १२३२ ॥ ॥१३ (कि)॥ २.९.७.८

[धा० ११ । उ० १ । स्व० ३ ।]

सूक्तं (१४)

१. उभय॑ शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥ १२३३ ॥ २.९.७.९

२. तꣳ हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामꣳ हि ते मनः ॥ १२३४ ॥ ॥१४ (ची)॥ २.९.७.१०

[धा° १७ । उ° १ | स्व° ४ ॥]

इति सप्तमः खण्डः ॥ ७ ॥

## सूक्तं (१५)

१. पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
वायुमा रोह धर्मणा ॥ १२३५ ॥ २.९.८.१

२. पवमान नि तोशसे रयिꣳ सोम श्रवाय्यम् ।
इन्दो समुद्रमा विश ॥ १२३६ ॥ २.९.८.२

३. अपघ्नन्पवसे (मृधः क्रतुवित्सोम मत्सरः ।।
नुदस्वादेवयुं जनम् ॥)* ॥ १२३७ ॥ ॥१५ (लि)॥ २.९.८.३

[धा° १४ । उ° नास्ति । स्व° ३ ।]

## सूक्तं (१६)

१. अभी नो वाजसातमꣳ (रयिमर्ष शतस्पृहम् । ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥)* ॥ १२३८ ॥ २.९.८.३

२. वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ।
नि नेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो ॥ १२३९ ॥ २.९.८.४

३. परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः ।
धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ॥ १२४० ॥ ॥१६ (ली)॥ २.९.८.५

[धा० १४ । उ० नास्ति । स्व० ४ ।]

## सूक्तं (१७)

१. पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ १२४१ ॥ २.९.८.६

२. शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः ॥ १२४२ ॥ २.९.८.७

३. दिवो धर्त्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व १२४३ ॥ ॥१७ (हि)॥ २.९.८.८

[धा० ११ । उ० नास्ति | स्व० ३ ॥]

इत्यष्टमः खण्डः ॥ ८ ॥

## सूक्तं (१८)

१. प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव प्रियम् ।
अग्ने रथं न वेद्यम् ॥ १२४४ ॥ २.९.९.१

२. कविमिव प्रशꣳस्यं यं देवास इति द्विता ।
नि मर्त्येष्वादधुः ॥ १२४५॥ २.९.९.२

३. त्वं यविष्ठ दाशुषो नॄꣳ पाहि श्रृणुही गिरः ।
रक्षा तोकमुत त्मना ॥ १२४६ ॥ ॥१८ (यी)॥ २.९.९.३

[धा० १२ । उ० २ । स्व० ७ ।]

सूक्तं (१९)

१. एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ १२४७ ॥ २.९.९.४

२. अभि हि सत्य सोमपा उभे बभूथ रोदसी ।
इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥ १२४८ ॥ २.९.९.५

३. त्वꣳ हि शश्वतीनामिन्द्र धर्त्ता पुरामसि ।
हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥ १२४९ ॥ ॥१९ (फे)॥ २.९.९.६

[धा० २० । उ० २ । स्व० ७ ।]

सूक्तं (२०)

१. पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः ॥ १२५० ॥ २.९.९.७

२. त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ १२५१ ॥ २.९.९.८

३. इन्द्रमीशानमोजसाभि स्तोमैरनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ १२५२॥ ॥२० (ही)॥ २.९.९.९

[धा० ११ । उ० ना | स्व० ४ ॥]

इति नवमः खण्डः ॥ ९ ॥

इति पञ्चमप्रपाठके प्रथमोऽर्धः ॥ ५-१ ॥

इति नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ॥

अथ पञ्चमप्रपाठकस्य द्वितीयोऽर्धः ॥ ५-२ ॥

(१-२३) १ पराशरः शात्त्यः; २ शुनःशेप आजीगर्तिः स देवरातः कृत्रिमो वैश्वामित्रः; ३ असितः काश्यपो देवलो वा; ४, ७ राहूगण आंगिरसः; ५ (१-४), ५ (प्रथम पादः) प्रियमेध आंगिरसः; ५ (शेषास्त्रयः पादाः) ६ (प्रथमः पादः) १४ नृमेध आंगिरसः; ६ (शेषास्त्रयः पादाः) इध्मबाहो दार्ढच्युतः; ८ पवित्र आंगिरसो वा वसिष्ठो वा उभौ वा; ९ वसिष्टो मैत्रावरुणिः; १० वत्सः काण्वः; ११ शतं वैखानसः ; १२ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); १३ वसुर्भारद्वाजः; १५ भर्गः प्रागाथः; १६ भरद्वाजो बार्हस्पत्यः; १७ मनुराप्सवः; १८ अम्बरीषो वार्षगिरिः ऋजिश्वा भारद्वाजश्च; १९ अग्नयो धिष्ण्या ऐश्वराः; २० अमहीयुरांगिरसः; २१ त्रिशोकः काण्वः; २२ गोतमो राहूगणः; २३ मदुच्छन्दा वैश्वामित्रः ॥ १-७, ११-१३, १६-२० पवमानः सोमः ; ८ पवमानाध्येता; ९, १४-१५, २१ (२-३) २२-२३ इन्द्रः; ९ अग्निः; २१ (१) अग्नीन्द्रौ ॥ १, ६ त्रिष्टुप्; २-७, १०-११, १६, २०-२१ गायत्री ; ८, १८, २३ अनुष्टुप्; १२ (१-२), १४, १५ प्रगाथः = (विषमा बृहती, सतोबृहती); १३ (३), १९ द्विपदा विराट्; १३ जगती; १७, २२ उष्णिक् ॥

### सूक्तं (१)

१. अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १२५३ ॥ २.१०.१.१

२. मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः ।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम ॥ १२५४ ॥ २.१०.१.२

३. महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ १२५५ ॥ ॥१ (टै)॥ २.१०.१.३

[धा॰ २८ । उ॰ १ । स्व॰ ८ ।]

## सूक्तं (२)

१. एष देवो अमर्त्यः पर्णवीरिव दीयते ।
अभि द्रोणान्यासदम् ॥ १२५६ ॥ २.१०.१.४

२. एष विप्रैरभिष्टुतोऽपो देवो वि गाहते ।
दधद्रत्नानि दाशुषे ॥ १२५७॥ २.१०.१.५

३. एष विश्वानि वार्या शूरो यन्निव सत्वभिः ।
पवमानः सिषासति ॥ १२५८ ॥ २.१०.१.६

४. एष देवो रथर्यति पवमानो दिशस्यति ।
आविष्कृणोति वग्वनुम् ॥ १२५९ ॥ २.१०.१.७

५. एष देवो विपन्युभिः पवमान ऋतायुभिः ।
हरिर्वाजाय मृज्यते ॥ १२६० ॥ २.१०.१.८

६. एष देवो विपा कृतोऽति ह्वरांऽसि धावति ।
पवमानो अदाभ्यः ॥ १२६१ ॥ २.१०.१.९

७. एष दिवं वि धावति तिरो रजांऽसि धारया ।
पवमानः कनिक्रदत् ॥ १२६२ ॥ २.१०.१.१०

८. एष दिवं व्यासरत्तिरो रजांऽस्यस्तृतः ।
पवमानः स्वध्वरः ॥ १२६३ ॥ २.१०.१.११

९. एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
हरिः पवित्रे अर्षति ॥ १२६४ ॥ २.१०.१.१२

१०. एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः ।
धारया पवते सुतः ॥ १२६५ ॥ ॥२ (दू)॥ २.१०.१.१३

इति प्रथमः खण्डः ॥ १ ॥

[धा॰ ३४ । उ॰ ३| स्व॰ ६ ॥]

सूक्तं (३)

१. एष धिया यात्यण्व्या शूरो रथेभिराशुभिः ।
गच्छन्निन्द्रस्य निष्कृतम् ॥ १२६६ ॥ २.१०.२.१

२. एष पुरू धियायते बृहते देवतातये ।
यत्रामृतास आशत ॥ १२६७ ॥ २.१०.२.२

३. एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः ।
प्रचक्राणं महीरिषः ॥ १२६८ ॥ २.१०.२.३

४. एष हितो वि नीयतेऽन्तः शुन्ध्यावता पथा ।
यदी तुञ्जन्ति भूर्णयः ॥ १२६९॥ २.१०.२.४

५. एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः ।
पतिः सिन्धूनां भवन् ॥ १२७० ॥ २.१०.२.५

६. एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा ।
नृम्णा दधान ओजसा ॥ १२७१ ॥ २.१०.२.६

७. एष वसूनि पिब्दनः परुषा ययिवाꣳ अति ।
अव शादेषु गच्छति ॥ १२७२ ॥ २.१०.२.७

८. एतमु त्यं दश क्षिपो हरिꣳ हिन्वन्ति यातवे ।
स्वायुधं मदिन्तमम् ॥ १२७३ ॥ ॥ ३ (के)॥ २.१०.२.८

[धा॰ ३१ । उ॰ १| स्व॰ ७ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (४)

१. एष उ स्य वृषा रथोऽव्यो वारेभिरव्यत ।
गच्छन्वाजꣳ सहस्रिणम् ॥ १२७४ ॥ २.१०.३.१

२. एतं त्रितस्य योषणो हरिꣳ हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥ १२७५ ॥ २.१०.३.२

३. एष स्य मानुषीष्वा श्येनो न विक्षु सीदति ।
गच्छं जारो न योषितम् ॥ ३ ॥ ॥ १२७६ ॥ २.१०.३.३

४. एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः ।
य इन्दुर्वारमाविशत् ॥ १२७७ ॥ २.१०.३.४

५. एष स्य पीतये सुतो हरिरर्षति धर्णसिः ।
क्रन्दन्योनिमभि प्रियम् ॥ १२७८॥ २.१०.३.५

६. एतं त्य॒ हरितो दश मर्मृज्यन्ते अपस्युवः ।
याभिर्मदाय शुम्भते ॥ १२७९ ॥ ॥४ (बी)॥ २.१०.३.६

[धा॰ २५ । उ॰ ८ | स्व॰ ४ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (५)

१. एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः ।
अव्यं वारं वि धावति ॥ १२८० ॥ २.१०.४.१

२. एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः ।
विश्वा धामान्याविशन् ॥ १२८१ ॥ २.१०.४.२

३. एष देवः शुभायतेऽधि योनावमर्त्यः ।
वृत्रहा देववीतमः ॥ १२८२ ॥ २.१०.४.३

४. एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः ।
अभि द्रोणानि धावति ॥ १२८३ ॥ २.१०.४.४

५. एष सूर्यमरोचयत्पवमानो अधि द्यवि ।
पवित्रे मत्सरो मदः ॥ १२८४ ॥ २.१०.४.५

६. एष सूर्येण हासते संवसानो विवस्वता ।
पतिर्वाचो अदाभ्यः ॥ १२८५ ॥ ॥५ (के)॥ २.१०.४.६

[धा॰ २६ । उ॰ १ | स्व॰ ७ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (६)

१. एष कविरभिष्टुतः पवित्रे अधि तोशते ।
पुनानो घ्नन्नप द्विषः ॥ १२८६ ॥ २.१०.५.१

२. एष इन्द्राय वायवे स्वर्जित्परि षिच्यते ।
पवित्रे दक्षसाधनः ॥ १२८७ ॥ २.१०.५.२

३. एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः ।
सोमो वनेषु विश्ववित् ॥ १२८८ ॥ २.१०.५.३

४. एष गव्युरचिक्रदत्पवमानो हिरण्ययुः ।
इन्दुः सत्राजिदस्तृतः ॥ १२८९ ॥ २.१०.५.४

५. एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः ।
पुनान इन्दुरिन्द्रमा ॥ १२९० ॥ २.१०.५.५

६. एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति ।
देवावीरघशꣳसहा ॥ १२९१॥ ॥६ (गु)॥ २.१०.५.६

[धा॰ ३१ । उ॰ ३ | स्व॰ ५ ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (७)

१. स सुतः पीतये वृषा सोमः पवित्रे अर्षति ।
विघ्नन्रक्षाꣳसि देवयुः ॥ १२९२ ॥ २.१०.६.१

२. स पवित्रे विचक्षणो हरिरर्षति धर्णसिः ।
अभि योनिं कनिक्रदत् ॥२ ॥ ॥ १२९३ ॥ २.१०.६.२

३. स वाजी रोचनं दिवः पवमानो वि धावति ।
रक्षोहा वारमव्ययम् ॥ १२९४ ॥ २.१०.६.३

४. स त्रितस्याधि सानवि पवमानो अरोचयत् ।
जामिभिःसूर्यꣳ सह ॥ १२९५ ॥ २.१०.६.४

५. स वृत्रहा वृषा सुतो वरिवोविददाभ्यः ।
सोमो वाजमिवासरत् ॥ १२९६ ॥ २.१०.६.५

६. स देवः कविनेषितोऽभि द्रोणानि धावति ।
इन्दुरिन्द्राय मꣳहयन् ॥ १२९७ ॥ ॥७ (खे) २.१०.६.६

[धा॰ २१ । उ॰ २ | स्व॰ ७ ॥]

इति षष्ठः खण्डः ॥६ ॥

## सूक्तं (८)

१. यः पावमानीरध्येत्यृषिभिः सम्भृतꣳरसम् ।
सर्वꣳ स पूतमश्नाति स्वदितं मातरिश्वना ॥ १२९८ ॥ २.१०.७.१

२. पावमानीर्यो अध्येत्यृषिभिः सम्भृतꣳरसम् ।
तस्मै सरस्वती दुहे क्षीरꣳ सर्पिर्मधूदकम् ॥ १२९९ ॥ २.१०.७.२

३. पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
ऋषिभिः सभृतो रसो ब्राह्मणेष्वमृतꣳ हितम् ॥ १३०० ॥ २.१०.७.३

४. पावमानीर्दधन्तु न इमं लोकमथो अमुम् ।
कामान्त्समर्धयन्तु नो देवीर्देवैः समाहृताः ॥ १३०१ ॥ २.१०.७.४

५. येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥ १३०२॥ २.१०.७.५

६. पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् ।
पुण्याꣳश्च भक्षान्भक्षयत्यमृतत्वं च गच्छति ॥ १३०३ ॥ ॥८ (ती)॥ २.१०.७.६

[धा॰ ४४ । उ॰ १ | स्व॰ ४ ॥]

इति सप्तमः खण्डः ॥७ ॥

सूक्तं (९)

१. अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुꣳ रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १३०४ ॥ २.१०.८.१

२. स मह्ना विश्वा दुरितानि साह्वानग्नि ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥ १३०५ ॥ २.१०.८.२

३. त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १३०६ ॥ ॥९ (ही)॥ २.१०.८.३

[धा० २१ । उ० नास्ति । स्व० ४ ।]

## सूक्तं (१०)

१. महा॑ इन्द्रो य ओजसा पर्जन्यो वृष्टिमा॑ इव ।
स्तोमैर्वत्सस्य वावृधे ॥ १३०७ ॥ २.१०.८.४

२. कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।
जामि ब्रुवत आयुधा ॥ १३०८ ॥ २.१०.८.५

३. प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।
विप्रा ऋतस्य वाहसा ॥ १३०९ ॥ ॥१० (टि)॥ २.१०.८.६

[धा० ८ । उ० १ | स्व० ३ ॥]

इत्यष्टमः खण्डः ॥ ८ ॥

## सूक्तं (११)

१. पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत ।
जीरा अजिरशोचिषः ॥ १३१०॥ २.१०.९.१

२. पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः ।
हरिश्चन्द्रो मरुद्गणः ॥ १३११॥ २.१०.९.२

३. पवमान व्यश्नुहि रश्मिभिर्वाजसातमः ।
दधत्स्तोत्रे सुवीर्यम् ॥ १३१२ ॥ ॥११ (ह)॥ २.१०.९.३

[धा॰ ११ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (१२)

१. परीतो षिञ्चता सुत॰ सोमो य उत्तम॰ हविः ।
दधन्वा॰ यो नर्यो अप्स्व३न्तरा सुषाव सोममद्रिभिः ॥ १३१३ ॥ २.१०.९.४

२. नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिन्तरः ।
सुते चित्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥ १३१४ ॥ २.१०.९.५

३. परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ १३१५ ॥ ॥१२ (खा)॥ २.१०.९.६

[धा॰ १६ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (१३)

१. असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्यय॰ श्येनो न योनिं घृतवन्तमासदत् ॥ १३१६ ॥ २.१०.९.७

२. पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।
स्वसार आपो अभि गा उदासरन्त्सं ग्रावभिर्वसते वीते अध्वरे ॥ १३१७ ॥ २.१०.९.८

३. कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
अपसेधन् दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजम् ॥ १३१८॥ ॥१३ (गू)॥
२.१०.९.९

[धा० २६ । उ० ३ | स्व० ६ ॥]

इति नवमः खण्डः ॥ ९ ॥

सूक्तं (१४)

१. श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥ १३१९ ॥ २.१०.१०.१

२. अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
यो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ १३२०॥ ॥१४ (लू)॥ २.१०.१०.२

[धा० १९ । उ० नास्ति । स्व० ६ ।]

(१५)

१. यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ १३२१ ॥ २.१०.१०.३

२. त्वꣳ हि राधसस्पते राधसो महः क्षयस्यासि विधर्ता ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ १३२२ ॥ ॥१५ (बा)॥ २.१०.१०.४

[धा० २० । उ० ३ । स्व० २।]

इति दशमः खण्डः ॥ १० ॥

सूक्तं (१६)

१. त्वꣳ सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे ।
पवस्व मꣳहयद्रयिः ॥ १३२३ ॥ २.१०.११.१

२. त्वꣳ सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः ।
इन्दुः सत्राजिदस्तृतः ॥ १३२४॥ २.१०.११.२

३. त्वꣳ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् ।
द्युमन्तꣳ शुष्ममा भर ॥ १३२५ ॥ ॥१ ६ (ली)॥ २.१०.११.३

[धा° १४ । उ° नास्ति । स्व° ४ ।]

सूक्तं (१७)

१. पवस्व देववीतय इन्दो धाराभिरोजसा ।
आ कलशं मधुमान्त्सोम नः सदः ॥ १३२६ ॥ २.१०.११.४

२. तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः ।
त्वां देवासो अमृताय कं पपुः ॥ १३२७ ॥ २.१०.११.५

३. आ नः सुतास इन्दवः पुनाना धावता रयिम् ।
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ १३२८ ॥ ॥१७ (वौ)॥ २.१०.११.६

[धा° १५ । उ° नास्ति । स्व° नास्ति ।]

## सूक्तं (१८)

१. परि त्यꣳ हर्यतꣳ हरिं बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाꣳ इत्परि मदेन सह गच्छति ॥ १३२९ ॥ २.१०.११.७

२. द्वियं पञ्च स्वयशसꣳ सखायो अद्रिसꣳहतम् ।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥ १३३० ॥ २.१०.११.८

३. इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥ १३३१॥ ॥१८ (जी)॥ २.१०.११.९

[धा० २२ । उ० ३ । स्व० ४ ।]

## सूक्तं (१९)

१. पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ १३३२ ॥ २.१०.११.१०

२. प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥ १३३३ ॥ २.१०.११.११

३. शिशुं जज्ञानꣳ हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ॥ १३३४ ॥ ॥१९ (का)॥ २.१०.११.१२

[धा० ११ । उ० १ । स्व० २ ।]

## सूक्तं (२०)

१. उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
इन्दुं देवा अयासिषुः ॥ १३३५ ॥ २.१०.११.१३

२. तमिद्वर्धन्तु नो गिरो वत्स२स२शिश्वरीरिव ।
य इन्द्रस्य हृद२ सनिः ॥ १३३६ ॥ २.१०.११.१४

३. अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
वर्धा समुद्रमुक्थ्य ॥ १३३७॥ ॥२० (ही)॥ २.१०.११.१५

[धा॰ ११ । उ॰ नास्ति | स्व॰ ४ ॥]

इति एकादशः खण्डः ॥ ११ ॥

## सूक्तं (२१)

१. आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ॥ १३३८ ॥ २.१०.१२.१

२. बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः ।
येषामिन्द्रो युवा सखा ॥ १३३९ ॥ २.१०.१२.२

३. अयुद्ध इद्युधा वृत२ शूर आजति सत्वभिः ।
येषामिन्द्रो युवा सखा ॥ १३४० ॥ ॥२१ (ठ)॥ २.१०.१२.३

[धा॰ ३ । उ॰ २ । स्व॰ १ ।]

## सूक्तं (२२)

१. य एक इद्विदयते वसु मर्त्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ १३४१ ॥ २.१०.१२.४

२. यश्चिद्धि त्वा बहुभ्य आ सुतावाꣳ आविवासति ।
उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥ १३४२ ॥ २.१०.१२.५

३. कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥ १३४३ ॥ ॥२२ (कि)॥ २.१०.१२.६

[धा॰ ११ । उ॰ १ । स्व॰ ३ ।]

सूक्तं (२३)

१. गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वꣳशमिव येमिरे ॥ १३४४॥ २.१०.१२.७

२. यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ १३४५॥ २.१०.१२.८

३. युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ १३४६॥ ॥२३ (बी)॥ २.१०.१२.९

[धा॰ २५ । उ॰ ३ | स्व॰ ४ ॥]

इति द्वादशः खण्डः ॥ १२ ॥

इति पञ्चमप्रपाठके दितीयोऽर्धः, पञ्चमप्रपाठकश्च समाप्तः ॥ ५-२ ॥

इति दशमोऽध्यायः ॥ १० ॥

## अथ एकादशोऽध्यायः ॥

अथ षष्ठप्रपाठके प्रथमोऽर्धः ॥ ६-१ ॥

(१-११) १ मेधातिथिः काण्वः; २, १० वसिष्ठो मैत्रवरुणिः; ३ प्रगाथः काण्वः; ४ पराशरः शाक्त्यः; ५ प्रगाथो घौरः काण्वः; ६ मेध्यतिथिः काण्वः; ७ त्र्यरुणस्त्रैवृष्णः त्रसदस्युः पौरुकुत्स्य; ८ अग्नयो धिष्ण्या ऐश्वराः; ९ हिरण्यस्तूप आङ्गिरसः; १० सार्पराज्ञी ॥ १ आप्रीसूक्तं = (२१ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ नराशंसः, ४ इळः); २ आदित्यः; ३, ५-६ इन्द्रः; ४, ७-९ पवमानः सोमः ; १० अग्निः; ११ आत्मा सूर्यो वा ॥ १-३, ११ गायत्री; ४ त्रिष्टुप्; ५-६ प्रगाथः = (विषमा बृहती, समा सतो बृहती); ७ पिपीलिकमध्या अनुष्टुप्; ८ द्विपदा विराट्; ९ जगती; १० विराट् ॥

### सूक्तं (१)

१. सुषमिद्धो न आ वह देवाꣳ अग्ने हविष्मते ।
होतः पावक यक्षि च ॥ १३४७ ॥ २.११.१.१

२. मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।
अद्या कृणुह्यूतये ॥ १३४८ ॥ २.११.१.२

३. नराशꣳसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।
मधुजिह्वꣳ हविष्कृतम् ॥ १३४९ ॥ २.११.१.३

४. अग्ने सुखतमे रथे देवाꣳ ईडित आ वह ।
असि होता मनुर्हितः ॥ १३५० ॥ ॥१ (रा)॥ २.११.१.४

[धा० १८ । उ० नास्ति । स्व० २ ।]

सूक्तं (२)

१. यदद्य सूर उदितेऽनागा मित्रो अर्यमा ।
सुवाति सविता भगः ॥ १३५१॥ २.११.१.५

२. सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः ।
ये नो अꣳहोऽतिपिप्रति ॥ १३५२ ॥ २.११.१.६

३. उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
महो राजान ईशते ॥ १३५३ ॥ ॥२ (खि)॥ २.११.१.७

[धा॰ ११ । उ॰ २ । स्व॰ ३ ।]

सूक्तं (३)

१. उ त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः ।
अव ब्रह्मद्विषो जहि ॥ १३५४ ॥ २.११.१.८

२. पदा पणीनराधसो नि बाधस्व महाꣳ असि ।
न हि त्वा कश्च न प्रति ॥ १३५५ ॥ २.११.१.९

३. त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
त्वꣳ राजा जनानाम् ॥ १३५६ ॥ ॥ ३ (ठि)॥ २.११.१.१०

इति प्रथमः खण्डः ॥ १ ॥

[धा॰ १३ । उ॰ २ | स्व॰ ३ ॥]

## सूक्तं (४)

१. आ जागृविर्विप्र ऋतां मतीनाꣳ सोमः पुनानो असदच्चमूषु ।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ १३५७ ॥ २.११.२.१

२. स पुनान उप सूरे दधान ओभे अप्रा रोदसी वी ष आवः ।
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्र यꣳसत् ॥ १३५८ ॥ २.११.२.२

३. स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाꣳ अभि नो ज्योतिषावित् ।
यत्र नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमिष्णन् ॥ १३५९ ॥ ॥४ (तै)॥ २.११.२.३

[धा॰ १९ । उ॰ १ । स्व॰ ८ ।]

## सूक्तं (५)

१. मा चिदन्यद्वि शꣳसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणꣳ सचा सुते मुहुरुक्था च शꣳसत ॥ १३६०॥ २.११.२.४

२. अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम् ।
विद्वेषणꣳ संवननमुभयङ्करं मꣳहिष्ठमुभयाविनम् ॥ १३६१ ॥ ॥५ (यी)॥ २.११.२.५

[धा॰ १७ । उ॰ नास्ति । स्व॰ ४ ।]

## सूक्तं (६)

१. उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ १३६२ ॥ २.११.२.६

२. कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत ।
इन्द्र२ स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ १३६३ ॥ ॥६ (ला)॥ २.११.२.७

[धा० १४ । उ० नास्ति । स्व० २ ।]



## सूक्तं (७)

१. पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ १३६४ ॥ २.११.२.८

२. अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया र२हमाणः पुरन्ध्या ॥ १३६५॥ २.११.२.९

३. अनु हि त्वा सुत२ सोम मदामसि (महे समर्यराज्ये ।*
वाज२ अभि पवमान प्र गाहसे ॥ १३६६॥ ॥७ (ल)॥ २.११.२.१०

[धा० ९ । उ० नास्ति । स्व० १।]

## सूक्तं (८)

१. परि प्र धन्व (धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥)* ॥ १३६७॥ २.११.२.११

२. एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥ १३६८॥ २.११.२.१२

३. इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥ १३६९ ॥ ॥८ (ला)॥ २.११.२.१३

इति द्वितीयः खण्डः ॥ २ ॥

[धा० ९ । उ० नास्ति | स्व० २ ॥]

## सूक्तं (९)

१. सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन ॥ १३७० ॥ २.११.३.१

२. उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि ।
पवमानः सन्तनिः सुन्वतामिव मधुमान्द्रप्सः परि वारमर्षति ॥ १३७१ ॥ २.११.३.२

३. उक्षा मिमेति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ १३७२ ॥ ॥९ (ग)॥ २.११.३.३

[धा० २६ । उ० ३ । स्व० ४ ।]

## सूक्तं (१०)

१. अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् ।
दूरेदृशं गृहपतिमथव्युम् ॥ १३७३ ॥ २.११.३.४

२. तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥ १३७४॥ २.११.३.५

३. प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वा२ं शश्वन्त उप यन्ति वाजाः ॥ १३७५ ॥ ॥१० (डी)॥ २.१०.३.६

[धा० २८ । उ० ३ । स्व० ४ ।]

## सूक्तं (११)

१. आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः ॥ १३७६ ॥ २.११.३.७

२. अन्तश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवम् ॥ १३७७॥ २.११.३.८

३. त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय धीयते ।
प्रति वस्तोरह द्युभिः ॥ १३७८ ॥ ॥११ (छि)॥ २.११.३.९

इति तृतीयः खण्डः ॥ ३ ॥

[धा॰ १७ । उ॰ २ | स्व॰ ३ ॥]

इति षष्ठप्रपाठके प्रथमोऽर्धः ॥ ६-२ ॥

एकादशोऽध्यायः समाप्तः ॥ ११ ॥

# अथ द्वादशो ऽध्यायः ॥

अथ षष्ठप्रपाठके द्वितीयोऽर्धः ॥ ६-२ ॥

(१-२०) १ (१-२) गोतमो राहूगणः; १ (३), ८, ११ वसिष्ठो मैत्रावरुणिः; २, ७ भरद्वाजो बार्हस्पत्यः; ३ प्रजापतिर्वैश्वामित्रो वाच्यो वा ; ४, १३ सोभरिः काण्वः; ५ मेधातिथि-मेध्यातिथी काण्वौ; ६ (१) ऋजिश्वा भारद्वाजः; ६ (२) ऊर्ध्वसद्मा आंगिरसः; ९ तिरश्चीराङ्गिरसः; १० सुतंभर आत्रेयः; १२, १९ नृमेध-पुरुमेधावाङ्गिरसौ; १४ शुनःशेप आजीगर्तिः; १५ नोधा गौतमः; १६ मेध्यातिथिः काण्वः; १७ रेणुर्वैश्वामित्रः; १८ कुत्स आङ्गिरसः; २० अगस्त्यो मैत्रावरुणिः ॥ १-२, ७, १०, १३-१४ अग्निः; ३, ६, ८, ११, १५, १७-१८ पवमानः सोमः ; ४, ५, ९, १२, १६, १९, २०, इन्द्रः ॥ १-२, ७, १०, १४ गायत्री ; ३,९, १९ (१-२), २० (२-३) अनुष्टुप्; ४, ६, १३ काकुभः प्रगाथः = (विषमा ककुप्, , सम सतोबृहती); ५, १९ (३) बृहती; ८, ११, १५, १८ त्रिष्टुप्; १२, १५ प्रगाथः = (विषमा बृहती, सम सतोबृहती); १७ जगती; २० (१) स्कन्धोग्रीवी बृहती ॥

सूक्तं (१)

१. उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये ।
आरे अस्मे च शृण्वते ॥ १३७९ ॥ २.१२.१.१

२. यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु ।
अरक्षद्दाशुषे गयम् ॥ १३८० ॥ २.१२.१.२

३. स नो वेदो अमात्यमग्नी रक्षतु शन्तमः ।
उतास्मान्पात्वꣳहसः ॥ १३८१ ॥ २.१२.१.३

४. उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि ।
धनञ्जयो रणेरणे ॥ १३८२ ॥ ॥१ (ति)॥ २.१२.१.४

इति प्रथमः खण्डः ॥ १ ॥

[धा॰ १९ । उ॰ १ | स्व॰ ३ ॥]



## सूक्तं (२)

१. अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः ।
अरं वहन्त्याशवः ॥ १३८३ ॥ २.१२.२.१

२. अच्छा नो याह्या वहाभि प्रयाꣳसि वीतये ।
आ देवान्त्सोमपीतये ॥ १३८४ ॥ २.१२.२.२

३. उदग्ने भारत द्युमदजस्रेण दविद्युतत् ।
शोचा वि भाह्यजर ॥ १३८५ ॥ ॥२ (यी)॥ २.१२.२.३

[धा॰ १७ । उ॰ नास्ति । स्व॰ ४ ।]

## सूक्तं (३)

१. प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसꣳ हता मखं न भृगवः ॥ १३८६॥ २.१२.२.४

२. आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
सरज्जारो न योषणां वरो न योनिमासदम् ॥ १३८७ ॥ २.१२.२.५

३. स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ १३८८ ॥ ॥ ३ (खै)॥ २.१२.२.६

[धा॰ २१ । उ॰ २ । स्व॰ ८ ।]

सूक्तं (४)

१. अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
युधेदापित्वमिच्छसे ॥ १३८९ ॥ २.१२.२.७

२. न की रेवन्तꣳसख्याय विन्दसे पीयन्ति ते सुराश्वः ।
यदा कृणोषि नदनुꣳसमूहस्यादित्पितेव हूयसे ॥ १३९० ॥ ।।४ (पि)। । २.१२.२.८

[धा० १५ । उ० १ । स्व० ३ ।]

सूक्तं (५)

१. आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ १३९१॥ २.१२.२.९

२. आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ॥ १३९२ ॥ २.१२.२.१०

३. पिबा त्व३स्य गिर्वणः सुतस्य पूर्वपा इव ।
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥ १३९३ ॥ ॥५ (प)॥ २.१२.२.११

[धा० २० । उ० १ । स्व० १ ।]

सूक्तं (६)

१. आ सोता परि षिञ्चताश्वं न स्तोममप्तुरꣳरजस्तुरम् ।
वनप्रक्षमुदप्रुतम् ॥ १३९४ ॥ २.१२.२.१२

२. सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने ।
ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥ १३९५ ॥ ॥६ (या)॥ २.१२.२.१३

[धा॰ १२ । उ॰ नास्ति | स्व॰ २ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (७)

१. अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।
समिद्धः शुक्र आहुतः ॥ १३९६ ॥ २.१२.३.१

२. गर्भे मातुः पितुः पिता विदिद्युतानो अक्षरे ।
सीदन्नृतस्य योनिमा ॥ १३९७ ॥ २.१२.३.२

३. ब्रह्म प्रजावदा भर जातवेदो विचर्षणे ।
अग्ने यद्दीदयद्दिवि ॥ १३९८ ॥ ॥७ (व)॥ २.१२.३.३

[धा॰ १० । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (८)

१. अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता ॥ १३९९ ॥ २.१२.३.४

२. भद्रा वस्त्रा समन्या३ वसानो महान्कविर्निवचनानि शꣳसन् ।
आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥ १४००॥ २.१२.३.५

३. समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे ।
अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥ १४०१ ॥ ।।८ (रि)। । २.१२.३.६

[धा° १८ । उ° नास्ति । स्व° ३ ।]

सूक्तं (९)

१. एतो न्विन्द्र२ं स्तवाम शुद्ध२ंशुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वा२ंस२ंशुद्धैराशीर्वान्ममत्तु ॥ १४०२ ॥ २.१२.३.७

२. इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं वि धारय शुद्धो ममद्धि सोम्य ॥ १४०३॥ २.१२.३.८

३. इन्द्र शुद्धो हि नो रयि२ं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाज२ं सिषाससि ॥ १४०४ ॥ ॥९ (यी)॥ २.१२.३.९

[धा° १२ । उ° नास्ति | स्व° ४ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (१०)

१. अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।
देवस्य द्रविणस्यवः ॥ १४०५ ॥ २.१२.४.१

२. अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।
स यक्षद्दैव्यं जनम् ॥ १४०६ ॥ २.१२.४.२

३. त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञं वि तन्वते ॥ १४०७ ॥ ॥१० (रि)॥ २.१२.४.३

[धा॰ १३ । उ॰ नास्ति । स्व॰ ३ ।]

## सूक्तं (११)

१. अभि त्रिपृष्ठं वृषणं वयोधामाङ्गोषिणमवावशंत वाणीः ।
वना वसानो वरुणो न सिन्धूर्वि रत्नधा दयते वार्याणि ॥ १४०८ ॥ २.१२.४.४

२. शूरग्रामः सर्ववीरः सहावान् जेता पवस्व सनिता धनानि ।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान्पृतनासु शत्रून् ॥ १४०९ ॥ २.१२.४.५

३. उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरन्धी ।
अपः सिषासन्नुषसः स्व३र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥ १४१० ॥ ॥११ (५)॥
२.१२.४.६

[धा॰ ३० । उ॰ १ । स्व॰ ६ ।]

## सूक्तं (१२)

१. त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ १४११ ॥ २.१२.४.७

२. तमु त्वा नूनमसुर प्रचेतसꣳ राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥ १४१२ ॥ ॥१२ (त)॥ २.१२.४.८

[धा॰ १४ । उ॰ १ । स्व॰ १ ।]

## सूक्तं (१३)

१. यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ १४१३॥ २.१२.४.९

२. अपां नपात१ सुभग१ सुदीदितिमग्निमु श्रेष्ठशोचिषम् ।
स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥ ॥ १४१४ ॥ ॥१३ (ता)॥ २.१२.४.१०

[धा॰ १४ । उ॰ ना | स्व॰ २ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१४)

१. यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥ १४१५ ॥ २.१२.५.१

२. न किरस्य सहन्त्य पर्येता कयस्य चित् ।
वाजो अस्ति श्रवाय्यः ॥ १४१६ ॥ २.१२.५.२

३. स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।
विप्रेभिरस्तु सनिता ॥ १४१७ ॥ ॥१४ (ठा)॥ २.१२.५.३

[धा॰ १८ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (१५)

१. साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ १४१८ ॥ २.१२.५.४

२. सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः ।
मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः ॥ १४१९ ॥ २.१२.५.५

३. उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः ।
मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥ १४२०॥ ॥१५ (वू)॥ २.१२.५.६

[धा॰ ३० । उ॰ नास्ति । स्व॰ ६ ।]

(१६)

१. पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्मां२ अवन्तु ते धियः ॥ १४२१ ॥ २.१२.५.७

२. भूयाम ते सुमतौ वाजिनो वयं मा न स्तरभिमातये ।
अस्मां चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥ १४२२ ॥ ॥१६ (ल)॥ २.१२.५.८

[धा॰ १४ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (१७)

१. त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ १४२३ ॥ २.१२.५.९

२. स भक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे ।
तेजिष्ठा अपो मꣳहना परि व्यत यदी देवस्य श्रवसा सदो विदुः ॥ १४२४ ॥ २.१२.५.१०

३. ते अस्य सन्तु केतवोऽमृत्यवोऽदाभ्यासो जनुषी उभे अनु ।
येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णत ॥ १४२५॥ ॥१७ (चे)॥ २.१२.५.११

[धा० ३२ । उ० १ | स्व० ७ ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

सूक्तं (१८)

१. अभि वायुं वीत्यर्षा गृणानो३ऽभि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनꣳ रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ १४२६ ॥ २.१२.६.१

२. अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः ।
अभि चन्द्रा भर्त्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥ १४२७ ॥ २.१२.६.२

३. अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः ।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥ १४२८ ॥ ॥१८ (ख)॥ २.१२.६.३

[धा० २१ । उ० २ । स्व० ७ ।]

सूक्तं (१९)

१. यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ १४२८ ॥ २.१२.६.४

२. तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्ञातं यच्च जन्त्वम् ॥ १४३० ॥ २.१२.६.५

३ १ २ ३ १ २र ३ १ २र ३ २
३. आमासु पक्वमैरय आ सूर्य३ रोहयो दिवि ।
३ १ २र ३ २ ३ २ ३ १ २ ३ २
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ १४३१ ॥ ॥१९ (पे)॥ २.१२.६.६

[धा॰ ३० । उ॰ १ । स्व॰ ७ ।]

सूक्तं (२०)

१ २र ३ २ ३ १ २ ३ १ २र
१. मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः ॥ १४३२ ॥ २.१२.६.७

१ २ ३२उ ३ २ ३ १२
२. आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः ।
३ १ २ ३ १ २ ३ १ २र
सहावा३ इन्द्र सानसिः पृतना षाडमर्त्यः ॥ १४३३ ॥ २.१२.६.८

२उ ३ १ २ ३ २ ३ १ २ ३ १ २
३. त्व३ हि शूरः सनिता चोदयो मनुषा रथम् ।
३ २ ३ १ २ ३२उ ३ २ ३ २ ३ १ २
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥ १४३४ ॥ ॥२० (बि)॥ २.१२.६.६

[धा॰ २५ । उ॰ ३ | स्व॰ ३ ॥]

इति षष्ठः खण्डः ॥६ ॥

इति षष्ठप्रपाठके द्वितीयोऽर्धः ॥ ६-२ ॥

इति द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ॥

अथ षष्ठप्रपाठके तृतीयोऽर्धः ॥ ६-३ ॥

(१-२०) १ कवि भार्गवः; २, ९, १६ भरद्वाजो बार्हस्पत्यः; ३ असितः काश्यपो देवलो वा; ४ सुकक्षः आंगिरसः; ५ विभ्राड्वौर्यः; ६, ८ वसिष्ठो मैत्रवरुणिः; १०-१७ भार्गवः प्रागाथः; १०, १७ विश्वमित्रो गाथिनः; ११ मेधातिथिः काण्वः; १२ शतं वैखानसाः; १३ यजत आत्रेयः; १४ मदुच्छन्दा वैश्वामित्रः; १५ उशना काव्यः; १८ हर्यतः प्रागाथः; १९ बृहद्दिव आथर्वर्णः; २० गृत्समदः शौनकः ॥ १, ३, १५ पवमानः सोमः ; २, ४, ६, ७, १४, १९, २० इन्द्रः; ८ सरस्वान्; ९ सरस्वती; १० सविता; ११ ब्रह्मणस्पतिः; १२ अग्निः पवमानः; १३ मित्रावरुणौ; १६-१८ अग्निः ; १८ हर्वींषि वा; ५ सूर्यः ॥ १, ३-४, ८-१४, १६ (२-३), १८ गायत्री ; २ (१-३) अनुष्टुप्; २ (४) बृहती; ६, ७ प्रगाथः = (विषमा बृहती , समा सतोबृहती); १६ (१) वर्धमाना; १९ त्रिष्टुप्; २० (१) अष्टिः; २० (२-३) अतिशक्करी; ५ जगती ॥ १५

सूक्तं (१)

१. पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि ।
अयक्ष्मा बृहतीरिषः ॥ १४३५ ॥ २.१३.१.१

२. तया पवस्व धारया यया गाव इहागमन् ।
जन्यास उप नो गृहम् ॥ १४३६ ॥ २.१३.१.२

३. घृतं पवस्व धारया यज्ञेषु देववीतमः ।
अस्मभ्यं वृष्टिमा पव ॥ १४३७ ॥ २.१३.१.३

४. स न ऊर्जे व्य३व्ययं पवित्रं धाव धारया ।
देवासः शृणवन्हि कम् ॥ १४३८ ॥ २.१३.१.४

५. पवमानो असिष्यदद्रक्षांऽस्यपजङ्घनत् ।
प्रत्नवद्रोचयन्रुचः ॥ १४३९ ॥ ॥१ (ची)॥ २.१३.१.५

[धा॰ २२ । उ॰ १ । स्व॰ ४ ।]

सूक्तं (२)

१. प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ १४४० ॥ २.१३.१.६

२. एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
अमत्रेभिर्ऋजीषिणमिन्द्रꣳ सुतेभिरिन्दुभिः ॥ १४४१ ॥ २.१३.१.७

३. यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ ।
वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ॥ १४४२ ॥ २.१३.१.८

४. अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् ।
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत् ॥ १४४३॥ ॥२ (ठ)॥ २.१३.१.९

[धा॰ २३ । उ॰ २ | स्व॰ १ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (३)

१. बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे ।
सोमाय गाथमर्चत ॥ १४४४ ॥ २.१३.२.१

२. हस्तच्युतेभिरद्रिभिः सुतꣳ सोमं पुनीतन ।
मधावा धावता मधु ॥ १४४५ ॥ २.१३.२.२

३. नमसेदुप सीदत दध्नेदभि श्रीणीतन ।
इन्दुमिन्द्रे दधातन ॥ १४४६ ॥ २.१३.२.३

४. अमित्रहा विचर्षणिः पवस्व सोम शं गवे ।
देवेभ्यो अनुकामकृत् ॥ १४४७॥ २.१३.२.४

५. इन्द्राय सोम पातवे मदाय परि षिच्यसे ।
मनश्चिन्मनसस्पतिः ॥ १४४८ ॥ २.१३.२.५

६. पवमान सुवीर्यꣳ रयिꣳ सोम रिरीहि णः ।
इन्द्रविन्द्रेण नो युजा ॥ १४४९ ॥ ॥ ३ (यू)॥ २.१३.२.६

[धा॰ ३२ । उ॰ नास्ति । स्व॰ ६।]

सूक्तं (४)

१. उद्धेदभि श्रुतामघं वृषभं नर्यापसम् ।
अस्तारमेषि सूर्य ॥ १४५० ॥ २.१३.२.७

२. नव यो नवतिं पुरो बिभेद बाह्वोजसा ।
अहिं च वृत्रहावधीत् ॥ १४५२ ॥ २.१३.२.८

३. स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।
उरुधारेव दोहते ॥ १४५२॥ ॥४ (ती)॥ २.१३.२.९

[धा॰ ९ । उ॰ १ | स्व॰ ४ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (५)



१. विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति ॥ १४५३ ॥ २.१३.३.१

२. विभ्राड् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ १४५४ ॥ २.१३.३.२

३. इद९ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ १४५५ ॥ ॥५ (जि)॥
२.१३.३.३

[धा° २७ । उ° ३ । स्व° ३।]

## सूक्तं (६)

१. इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ १४५६ ॥ २.१३.३.४

२. मा नो अज्ञाता वृजना दुराध्यो३ माशिवासोऽव क्रमुः ।
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥ १४५७॥ ॥६ (ल)॥ २.१३.३.५

[धा° ९ । उ° नास्ति । स्व° १ ।]

## सूक्तं (७)

१. अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः ।
विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥ १४५८ ॥ २.१३.३.६

२. प्रभङ्गी शूरो मघवा तुवीमघः सम्मिश्लो वीर्याय कम् ।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥ १४५९ ॥ ॥७ (वी)॥ २.१३.३.७

[धा॰ १५ । उ॰ नास्ति | स्व॰ ४ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (८)

१. जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः ।
सरस्वन्तꣳहवामहे ॥ १४६० ॥ ॥८ (रौ)॥ २.१३.४.१

[धा॰ ३ । उ॰ नास्ति । स्व॰ नास्ति ।]

सूक्तं (९)

१. उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।
सरस्वती स्तोम्या भूत् ॥ १४६१ ॥ ॥९ (हौ)॥ २.१३.४.२

[धा॰ १ । उ॰ नास्ति । स्व॰ नास्ति।]

सूक्तं (१०)

१. तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥१ ॥ ॥ १४६२ ॥ २.१३.४.३

२. सोमानां स्वरणं (कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ॥)* ॥ १४६३ ॥ २.१३.४.४

३. अग्न आयूंषि पवसे (आ सुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥)* ॥ १४६४ ॥ ॥१० (य)॥ २.१३.४.५

[धा॰ २ । उ॰ नास्ति । स्व॰ १।]

## सूक्तं (११)

१. ता नः शक्तं पार्थिवस्य (महो रायो दिव्यस्य ।
महि वा क्षत्रं देवेषु ॥)* ॥ १४६५ ॥ २.१३.४.६

२. ऋतमृतेन सपन्तेषिरं दक्षमाशाते ।
अद्रुहा देवौ वर्धेते ॥ १४६६ ॥ २.१३.४.७

३. वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।
बृहन्तं गर्तमाशाते ॥ १४६७ ॥ ॥११ (पा)॥ २.१३.४.८

[धा॰ ५ । उ॰ १ । स्व॰ २।]

## सूक्तं (१२)

१. युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि ॥ १४६८॥ २.१३.४.९

२. युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ॥ १४६९ ॥ २.१३.४.१०

३. केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ १४७०॥ ॥१२ (य)॥ २.१३.४.११

[धा॰ ७ । उ॰ नास्ति । स्व॰ १ ।]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१३)

१. अयꣳ सोम इन्द्र तुभ्यꣳसुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वꣳ ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥ १४७१ ॥ २.१३.५.१

२. स ईꣳ रथो न भुरिषाडयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥ १४७२ ॥ २.१३.५.२

३. शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण्न यज्ञः ॥ १४७३॥ ॥१३ (घी)॥ २.१३.५.३

[धा॰ २६ । उ॰ ४ । स्व॰ ४।]

## सूक्तं (१४)

१. त्वमग्ने यज्ञानाꣳहोता विश्वेषाꣳहितः ।
देवेभिर्मानुषे जने ॥ १४७४ ॥ २.१३.५.४

२. स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः ।
आ देवान्वक्षि यक्षि च ॥ १४७५ ॥ २.१३.५.५

३. वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा ।
अग्ने यज्ञेषु सुक्रतो ॥ १४७६॥ ॥१५ (वू)॥ २.१३.५.६

[धा० ६ । उ० नास्ति । स्व० नास्ति।]

सूक्तं (१५)

१. होता देवो अमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ॥ १४७७ ॥ २.१३.५.७

२. वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते ।
विप्रो यज्ञस्य साधनः ॥ १४७८ ॥ २.१३.५.८

३. धिया चक्रे वरेण्यो भूतानां गर्भमा दधे ।
दक्षस्य पितरं तना ॥ १४७९ ॥ ॥१५ (रा)॥ २.१३.५.९

[धा० २३ । उ० नास्ति | स्व० २ ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

सूक्तं (१६)

१. आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् ।
रसा दधीत वृषभम् ॥ १४८० ॥ २.१३.६.१

२. ते जानत स्वमोक्यं३ सं वत्सासो न मातृभिः ।
मिथो नसन्त जामिभिः ॥ १४८१ ॥ २.१३.६.२

३. उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।
इन्द्रे अग्ना नमः स्वः ॥ १४८२ ॥ ॥१६ (च)॥ २.१३.६.३

[धा० १२ । उ० १ । स्व० १ ।]

## सूक्तं (१८)

१. तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ १४८३ ॥ २.१३.६.४

२. वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ १४८४ ॥ २.१३.६.५

३. त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ १४८५ ॥ ॥१७ (णी)॥
२.१३.६.६

[धा० २३ । उ० ५ । स्व० ४ ।]

४. त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरुऽ सैनऽ सश्चद्देवो देवऽ सत्य इन्दुः सत्यमिन्द्रम् ॥ १४८६ ॥ २.१२.६.७

५. साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राध स्तुवते काम्यं वसु प्रचेतन सैनऽ सश्चद्देवो देवऽ सत्य इन्दुः सत्यमिन्द्रम् ॥ १४८७ ॥
२.१३.६.८

६. अध त्विषीमाऽअभ्योजसा कृविं युधाभवदा रोदसी आपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय सैनऽसश्चद्देवो देवऽ सत्य इन्दुः सत्यमिन्द्रम् ॥ १४८८ ॥
॥१८ (थि)॥ २.१३.६.९

[धा॰ ५४ । उ॰ २ | स्व॰ १३ ॥]

इति षष्ठः खण्डः ॥६ ॥

इति षष्ठप्रपाठके तृतीयोऽर्धः षष्ठप्रपाथकश्च समाप्तः॥ ६ ॥

इति त्रयोदशोऽध्यायः ॥ १३ ॥

# अथ चतुर्दशोऽध्यायः ॥

अथ सप्तमप्रपाठके प्रथमोऽर्धः ॥ ७-१ ॥

(१-२०) १ , ९ प्रियमेध आङ्गिरसः; २ नृमेध-पुरुमेधावाङ्गिरसौ; ३, ७ त्र्यरुणस्त्रैवृष्णः त्रसदस्युः पौरुकुत्सः; ४ शुनःशेप आजीगर्तिः; ५ वत्स काण्वः; ६ अग्निस्तापसः; ८ विश्वमना वैयश्वः १० वसिष्ठो मैत्रावरुणिः; ११ सौभरिः काण्वः; १२ शतं वैखानसः; १३ वसूयव आत्रेयः; १४ गोतमो राहूगणः; १५ केतुराग्नेयः; १६ विरूप आङ्गिरसः ॥ १-२, ५, ८-९ इन्द्रः; ३, ७ पवमानः सोमः; ४, १०-११, १३-१६ अग्निः; ६ विश्वेदेवाः; १२ अग्निः पवमानः ॥ १, ४-५, १२-१६ गायत्री; २, १० प्रगाथः = (विषमा बृहती , सम सतोबृहती) ३, ७ ऊर्ध्वा बृहती; ६ अनुष्टुप्; ८-९ उष्णिक्; ११ बृहती ॥

सूक्तं (१)

१. अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
सूनुꣳ सत्यस्य सत्पतिम् ॥ १४८९ ॥ २.१४.१.१

२. आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।
यत्राभि संनवामहे ॥ १४९० ॥ २.१४.१.२

३. इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
यत्सीमुपह्वरे विदत् ॥ १४९१॥ ॥१ (हा)॥ २.१४.१.३

[धा॰ ११ । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (२)

१. आ नो विश्वासु हव्यमिन्द्रᳫ समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ १४९२ ॥ २.१४.१.४

२. त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥ १४९३ ॥ ॥१२(य)॥ २.१४.१.५

[धा० १७ । उ० नास्ति । स्व० ३ ।]

## सूक्तं (३)

१. प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहद्दिव आ निरधुक्षत ।
इन्द्रमभि जायमानᳫ समस्वरन् ॥ १४९४ ॥ २.१४.१.६

२. आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
दिवो न वारᳫ सविता व्यूर्णुते ॥ १४९५ ॥ २.१४.१.७

३. अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।
यूथे न निष्ठा वृषभो वि राजसि ॥ १४९६ ॥ ॥ ३ (खू)॥ २.१४.१.८

[धा० १६ । उ० २ । स्व० ६ ।]

## सूक्तं (४)

१. इममू षु त्वमस्माकᳫ सनिं गायत्रं नव्याᳫसम् ।
अग्ने देवेषु प्र वोचः ॥ १४९७॥ २.१४.१.९

२. विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
सद्यो दाशुषे क्षरसि ॥ १४९८॥ २.१४.१.१०

३. आ नो भज परमेष्वा वाजेषु मध्यमेषु ।
शिक्षा वस्वो अन्तमस्य ॥ १४९९ ॥ ॥४ (टा)॥ २.१४.१.११

[धा॰ १६ । उ॰ २ । स्व॰ ६ । ]

## सूक्तं (५)

१. अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।
अह२ सूर्य इवाजनि ॥ १५०० ॥ २.१४.१.१२

२. अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत् ।
येनेन्द्रः शुष्ममिद्दधे ॥ १५०१ ॥ २.१४.१.१३

३. ये त्वामिन्द्र न तुष्टवुर्ऋषयो ये च तुष्टवुः ।
ममेद्वर्धस्व सुष्टुतः ॥ १५०२॥ ॥५ (थु)॥ २.१४.१.१४

[धा॰ १४ । उ॰ २ | स्व॰ ५ ॥]

इति प्रथमः खण्डः ॥ १ ॥

## सूक्तं (६)

१. अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।
ये देवत्रा य आयुषु तेभिर्नो महया गिरः ॥ १५०३ ॥ २.१४.२.१

२. प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः ।
तनये तोके अस्मदा सम्यङ्वाजैः परीवृतः ॥ १५०४ ॥ २.१४.२.२

३. त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देवतातये रायो दानाय चोदय ॥ १५०५ ॥ ॥६ (डि)॥ २.१४.२.३

[धा० १८ । उ ३ । स्व० ३ ।]

सूक्तं (७)

१. त्वं सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः ।
स त्वं नो वीर वीर्याय चोदय ॥ १५०६॥ २.१४.२.४

२. अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षि तम् ।
शर्याभिर्न भरमाणो गभस्त्योः ॥ १५०७ ॥ २.१४.२.५

३. अजीजनो अमृत मर्त्याय अमृतस्य धर्मन्नमृतस्य चारुणः ।
सदासरो वाजमच्छा सनिष्यदत् ॥ १५०८ ॥ ॥७ (ले)॥ २.१४.२.६

[धा० १० । उ० नास्ति । स्व० ७ ।]

सूक्तं (८)

१. एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
प्र राधाꣳसि चोदयते महित्वना ॥ १५०९ ॥ २.१४.२.७

२. उपो हरीणां पतिं राधः पृञ्चन्तमब्रवम् ।
नूनꣳ श्रुधि स्तुवतो अश्व्यस्य ॥ १५१० ॥ २.१४.२.८

३. न ह्यꣳ३ग पुरा च न जज्ञे वीरतरस्त्वत् ।
न की राया नैवथा न भन्दना ॥ १५११॥ ॥८(चा)॥ २.१४.२.९

[धा° १७ । उ° १ । स्व° ७७ ।]

## सूक्तं (९)

३२ ३ १२ ३१ २र
१. नदं व ओदतीनां नदं योयुवतीनाम् ।
१ २ ३ १ २ ३ १ २
पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ १५१२॥ ॥९ (व)॥ २.१४.२.१०

[धा° ५ । उ° नास्ति | स्व° १ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (१०)

३ १ २ ३ २ ३ १ २ ३ १ २
१. देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते १५१३ ॥ २.१४.३.१

१ २र ३२ ३ १२ ३ १ २ ३ १ २
२. तꣳ होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥ १५१४ ॥ ॥१० (लि)॥ २.१४.३.२

[धा° १४ । उ° नास्ति । स्व° ३ ।]

## सूक्तं (११)

१२ ३ १ २ ३ १ २ ३ १ २ ३ २
१. अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
२ ३ २ ३१ २र ३ १२ ३ १ २ ३ १ २
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ १५१५ ॥ २.१४.३.३

२ ३ १ २ ३ १ २ ३ १ २ ३ २
२. यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
३ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रसां मेधसाताविव त्मनाग्निं धीभिर्नमस्यत ॥ १५१६ ॥ २.१४.३.४

३. प्र दैवोदासो अग्नि (र्देव इन्द्रो न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि॥)* ॥ १५१७॥ ॥११ (हा)॥ २.१४.३.५

[धा॰ १६ । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (१२)

१. अग्न आयूंषि पवस (आ सुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥)* ॥ १५१८ ॥ २.१४.३.६

२. अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयम् ॥ १५१९ ॥ २.१४.३.७

३. अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।
दधद्रयिं मयि पोषम् ॥ १५२० ॥ ॥१२ (फ)॥ २.१४.३.८

[धा॰ १० । उ॰ २ । स्व॰ १ ।]

सूक्तं (१३)

१. अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।
आ देवान्वक्षि यक्षि च ॥ १५२१॥ २.१४.३.९

२. तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।
देवाँ आ वीतये वह ॥ १५२२ ॥ २.१४.३.१०

३. वीतिहोत्रं त्वा कवे द्युमन्तँ समिधीमहि ।
अग्ने बृहन्तमध्वरे ॥ १५२३ ॥ ॥१३ (टौ)॥ २.१४.३.११

[धा॰ १८ । उ॰ १ | स्व॰ ना ॥]

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१४)

१. अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि ।
विश्वासु धीषु वन्द्य ॥ १५२४ ॥ २.१४.४.१

२. आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।
विश्वासु पृत्सु दुष्टरम् ॥ १५२५ ॥ २.१४.४.२

३. आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् ।
मार्डीकं धेहि जीवसे ॥ १५२६ ॥ ॥१४ (वौ)॥ २.१४.४.३

[धा॰ १५ । उ॰ नास्ति । स्व॰ नास्ति ।]

## सूक्तं (१५)

१. अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु ।
तेन जेष्म धनंधनम् ॥ १५२७ ॥ २.१४.४.४

२. यया गा आकरामहै सेनयाग्ने तवोत्या ।
तां नो हिन्व मघत्तये ॥ १५२८ ॥ २.१४.४.५

३. आग्ने स्थूरं रयिं भर पृथुं गोमन्तमश्विनम् ।
अङ्धि खं वर्तया पविम् ॥ १५२९ ॥ २.१४.४.६

४. अग्ने नक्षत्रमजरमा सूर्यꣳ रोहयो दिवि ।
दधज्ज्योतिर्जनेभ्यः ॥ १५३० ॥ २.१४.४.७

५. अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् ।
बोधा स्तोत्रे वयो दधत् ॥ १५३१ ॥ ॥१५ (था)॥ २.१४.४.८

[धा॰ १९ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (१६)

१. अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपाꣳ रेताꣳसि जिन्वति ॥ १५३२॥ २.१४.४.९

२. ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः ।
स्तोता स्यां तव शर्मणि ॥ १५३३ ॥ २.१४.४.१०

३. उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
तव ज्योतीꣳष्यर्चयः ॥ १५३४॥ ॥१६ (ली)॥ २.१४.४.११

[धा॰ ४ । उ॰ नास्ति | स्व॰ ४ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

इति सप्तमप्रपाठके प्रथमोऽर्धः॥ ७-१ ॥

इति चतुर्दशोऽध्यायः ॥ १४ ॥

# अथ पञ्चदशोऽध्यायः ॥

अथ सप्तमप्रपाठके द्वितीयोऽर्धः ॥ ७-२ ॥



(१-१४) १, ११ गोतमो राहूगणः; २, ९ विश्वामित्रो गाथिनः; ३ विरूप आङ्गिरसः; ४, ७ भर्गः प्रागाथः; ५ त्रित आप्त्य; १० सोभरिः काण्वः; १२ गोपवन आत्रेयः; १३ भरद्वाजो बार्हस्पत्यो वीतहव्य आङ्गिरसो वा ; १३ प्रयोगो भार्गवः पावकोऽग्निर्बार्हस्पत्यो वा गृहपति-यविष्ठौ सहसः पुत्रवान्यतरो वा ॥ १-२, ५, ८-९ इन्द्रः; ३, ७ पवमानः सोमः ; ॥ अग्निः ॥ १-३, ६,९, १४ गायत्री; ४, ७ प्रगाथः = (विषमा बृहती , समा सतोबृहती); ११ उष्णिक्; १२ अनुष्टुमुखः प्रगाथः = (अनुष्टुप् + गायत्र्यौ); १३ जगती ॥

## सूक्तं (१)

१. कस्ते जामिर्जनानामग्ने को दाश्वध्वरः ।
को ह कस्मिन्नसि श्रितः ॥ १५३५ ॥ २.१५.१.१

२. त्वं जामिर्जनानामग्ने मित्रो असि प्रियः ।
सखा सखिभ्य ईड्यः ॥ १५३६ ॥ २.१५.१.२

३. यजा नो मित्रावरुणा यजा देवाꣳ ऋतं बृहत् ।
अग्ने यक्षि स्वं दमम् ॥ १५३७॥ ॥१ (रु)॥ २.१५.१.३

[धा॰ ८ । उ॰ नास्ति । स्व॰ ५ ।]

## सूक्तं (२)

१. ईडेन्यो नमस्यस्तिरस्तमाꣳसि दर्शतः ।
समग्निरिध्यते वृषा ॥ १५३८ ॥ २.१५.१.४

२. वृषो अग्निः समिध्यतेऽश्वो न देववाहनः ।
तꣳ हविष्मन्त ईडते ॥ १५३९ ॥ २.१५.१.५

३. वृषणं त्वा वयं वृषन्वृषणः समिधीमहि ।
अग्ने दीद्यतं बृहत् ॥ १५४० ॥ ॥२ (लि)॥ २.१५.१.६

[धा० ८ । उ० नास्ति । स्व० ५ ।]

## सूक्तं (३)

१. उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः ।
अग्ने शुक्रास ईरते ॥ १५४१॥ २.१५.१.७

२. उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत ।
अग्ने हव्या जुषस्व नः ॥ १५४२ ॥ २.१५.१.८

३. मन्द्रꣳ होतारमृत्विजं चित्रभानुं विभावसुम् ।
अग्निमीडे स उ श्रवत् ॥ १५४३॥ ॥ ३ (ह)॥ २.१५.१.९

[धा० ६ । उ० नास्ति । स्व० १ ।]

## सूक्तं (४)

१. पाहि नो अग्न एकया पाह्यु३ त द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ १५४४॥ २.१५.१.१०

२. पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव ।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ १५४५॥ ॥४ (यि)॥ २.१५.१.११

[धा॰ १७ । उ॰ नास्ति | स्व॰ ३ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (५)

१. इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाꣳ अदर्शि ।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥ १५४६ ॥ २.१५.२.१

२. कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम् ।
ऊर्ध्वं भानुꣳ सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति ॥ १५४७ ॥ २.१५.२.२

३. भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥ १५४८ ॥ ॥५ (यो)॥ २.१५.२.३

[धा॰ २७ । उ॰ नास्ति । स्व॰ ९ ।]

सूक्तं (६)

१. कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् ।
वराय देव मन्यवे ॥१ ॥ ॥ १५४९॥ २.१५.२.४

२. दाशेम कस्य मनसा यज्ञस्य सहसो यहो ।
कदु वोच इदं नमः ॥२ ॥ ॥ १५५० ॥ २.१५.२.५

३. अधा त्वꣳ हि नस्करो विश्वा अस्मभ्यꣳ सुक्षितीः ।
वाजद्रविणसो गिरः ॥ ३ ॥ ॥ १५५१ ॥ ॥६ (ट)॥ २.१५.२.६

[धा॰ १८ । उ॰ १ । स्व॰ १ ।]

### सूक्तं (७)

१. अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १५५२ ॥ २.१५.२.७

२. अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे ।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ १५५३ ॥ ॥ ७ (या)॥ २.१५.२.८

[धा॰ १७ । उ॰ नास्ति । स्व॰ २ ।]

### सूक्तं (८)

१. अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥ १५५४॥ २.१५.२.९

२. अग्निꣳ सूनुꣳ सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ १५५५॥ ॥८ (टा)॥ २.१५.२.१०

[धा॰ ८ । उ॰ १ | स्व॰ २ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

### सूक्तं (९)

१. अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् ।
तूर्णी रथः सदा नवः ॥ १५५६ ॥ २.१५.३.१

२. अभि प्रया२ँसि वाहसा दाश्वा२ँ अश्नोति मर्त्यः ।
क्षयं पावकशोचिषः ॥ १५५७ ॥ २.१५.३.२

३. साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।
अग्निस्तुविश्रवस्तमः ॥ १५५८ ॥ ॥९ (वि)॥ २.१५.३.३

[धा° १० । उ° नास्ति । स्व° ३ ।]

## सूक्तं (१०)

१. भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
भद्रा ऊत प्रशस्तयः ॥ १५५९ ॥ २.१५.३.४

२. भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये ॥ १५६०॥ ॥१० (लि)॥ २.१५.३.५

[धा° ४ । उ° नास्ति । स्व° ३ ।]

## सूक्तं (११)

१. अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे देहि जातवेदो महि श्रवः ॥ १५६१ ॥ २.१५.३.६

२. स इधानो वसुष्कविरग्निरीडेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ १५६२ ॥ २.१५.३.७

३. क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
स तिग्मजम्भ रक्षसो दह प्रति ॥ १५६३ ॥ ॥११ (टा)॥ २.१५.३.८

४.

[धा॰ १६ । उ॰ १ | स्व॰ २ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१२)

१. विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः ॥ १५६४ ॥ २.१५.४.१

२. यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् ।
प्रशꣳसन्ति प्रशस्तिभिः ॥ १५६५ ॥ २.१५.४.२

३. पन्याꣳसं जातवेदसं यो देवतात्युद्यता ।
हव्यान्यैरयद्दिवि ॥ १५६६ ॥ ॥१२ (टा)॥ २.१५.४.३

[धा॰ १३ । उ॰ १ । स्व॰ २ ।]

## सूक्तं (१३)

१. समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।
विप्रꣳ होतारं पुरुवारमद्रुहं कविꣳ सुम्नैरीमहे जातवेदसम् ॥ १५६७ ॥ २.१५.४.४

२. त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्त्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥ १५६८ ॥ २.१५.४.५

३. विभूषन्नग्न उभयाꣳ अनु व्रता दूतो देवानाꣳ रजसी समीयसे ।
यत्ते धीतिꣳ सुमतिमावृणीमहेऽध स्म नस्त्रिवरूथः शिवो भव ॥ १५६९ ॥ ॥१३ (या)॥ २.१५.४.६

[धा॰ २२ । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (१४)

१. उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
वायोरनीके अस्थिरन् ॥ १५७० ॥ २.१५.४.७

२. यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् ।
आपश्चिन्नि दधा पदम् ॥ १५७१ ॥ २.१५.४.८

३. पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः ।
भद्रा सूर्य इवोपदृक् ॥ १५७२॥ २.१५.४.९

[धा॰ १६ । उ॰ नास्ति | स्व॰ ५ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

इति सप्तमप्रपाठके द्वितीयोऽर्धः॥ ७-२ ॥

इति पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥

# अथ षोडशोऽध्यायः ॥

अथ सप्तमप्रपाठके तृतीयोऽर्धः ॥ ७-३ ॥

(१-२१) १, ८, १८ मेध्यातिथिः काण्वः; २ विश्वामित्रो गाथिनः; ३-४ भर्गः प्रागाथः ५ सोभरिः काण्वः; ६, १५ शुनःशेप आजीगर्तिः; ७ सुकक्ष आङ्गिरसः; ९ विश्वकर्मा भौवनः; १० अनानतः पारुच्छेपिः; ११ भरद्वाजो बार्हस्पत्यः; १२ गोतमो राहूगणः; १३ ऋजिश्वा भारद्वाजः; १४ वामदेवो गौतमः; १७ देवातिथिः काण्वः; १९ वालखिल्यः (श्रुष्टिगुः काण्वः) ; २० पर्वतनारदौ; २१ अत्रिभौमः ॥ १, ३-४, ७-८, १५, १७-१९ इन्द्रः; २ इन्द्राग्नी; ६ वरुणः; ९ विश्वकर्मा ; १०, २०, २१ पवमानः सोमः ; ११ पूषा; १२ मरुतः; १३ विश्वे देवाः; १४ द्यावापृथिवी; १६ अग्निः हर्वींषि वा ॥ १, ३-५, ८, १७-१९ प्रगाथः = (विषमा बृहती , समा सतोबृहती) २, ६-७, ११-१६ गायत्री; ९ त्रिष्टुप्; १० अत्यष्टिः; २० उष्णिक्; २१ जगती ॥

सूक्तं (१)

१. अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्त्रुद्रा गृणन्त पूर्व्यम् ॥ १५७३ ॥ २.१६.१.१

२. अस्येदिन्द्रो वावृधे वृष्ण्यꣳशवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ १५७४ ॥ ॥१ (रि)॥ २.१६.१.२

[धा° १८ । उ° नास्ति । स्व° ३ ।]

सूक्तं (२)

१. प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।
इन्द्राग्नी इष आ वृणे ॥ १५७५॥ २.१६.१.३

२. इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।
साकमेकेन कर्मणा ॥ १५७६ ॥ २.१६.१.४

३. इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः ।
ऋतस्य पथ्या३ अनु ॥ १५७७ ॥ २.१६.१.५

४. इन्द्राग्नी तविषाणि वा२ँसधस्थानि प्रया२ँसि च ।
युवोरसूर्य२ँहितम् ॥ १५७८ ॥ ॥२ (टा)॥ २.१६.१.६

[धा० १३ । उ० १ । स्व० २ ।]

सूक्तं (३)

१. शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १५७९ ॥ २.१६.१.७

२. पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।
न किर्हि दानं परि मर्धिषत्वे यद्यद्यामि तदा भर ॥ १५८० ॥ ॥ ३ (चु)॥ २.१६.१.८

[धा० १७ । उ० १ । स्व० ५ ।]

सूक्तं (४)

१. त्व२ँह्येहि चेरवे विदा भगं वसुत्तये ।
उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ॥ १५८१॥ २.१६.१.९

२. त्वं पुरू सहस्राणि शतानि च यूथा दानाय म२ँहसे ।
आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ॥ १५८२॥ ॥४ (फौ)॥ २.१६.१.१०

[धा॰ १५ । उ॰ २ । स्व॰ नास्ति ।]

## सूक्तं (५)

१. यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मघोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ १५८३ ॥ २.१६.१.११

२. अश्वं न गीर्भी रथ्यꣳसुदानवो मर्मृज्यन्ते देवयवः ।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ १५८४ ॥ ॥५ (पु)॥ २.१६.१.१२

[धा॰ १५ । उ॰ १ | स्व॰ ५ ॥]

इति प्रथमः खण्डः ॥ १ ॥

## सूक्तं (६)

१. इमं मे वरुण श्रुधी हवमद्या च मृडय ।
त्वामवस्युरा चके ॥१ ॥ ॥६ (व)॥ ॥ १५८५ ॥ २.१६.२.१

[धा॰ ५ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (७)

१. कया त्वं न ऊत्याभि प्र मन्दसे वृषन् ।
कया स्तोतृभ्य आ भर ॥ १५८६ ॥ ॥७ (य)॥ २.१६.२.२

[धा॰ २ । उ॰ नास्ति । स्व॰ २ ।]

## सूक्तं (८)

१. इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्र॰समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ १५८७ ॥ २.१६.२.३

२. इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे स्वानास इन्दवः ॥ १५८८॥ ॥८ (वा)॥ २.१६.२.४

[धा॰ १५ । उ॰ नास्ति । स्व॰ २ ।]

## सूक्तं (९)

१. विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तन्व३॰ स्वा हि ते ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ १५८९ ॥ ॥९ (ला)॥ २.१६.२.५

[धा॰ ९ । उ॰ नास्ति । स्व॰ २ ।]

## सूक्तं (१०)

१. अया रुचा हरिण्या पुनानो विश्वा द्वेषा॰सि तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ १५९० ॥ २.१६.२.६

२. प्राचीमनु प्रदिशं याति चेकितत्स॰ रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः ।
अग्मन्नुक्थानि पौ॰स्येन्द्रं जैत्राय हर्षयन् ।
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥ १५९१ ॥ २.१६.२.७

३. त्वं᳖ ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धीतिभिर्दमे ।
परावतो न साम तद्यत्रा रणन्ति धीतयः ।
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥ १५९२ ॥ ॥१० (ङे)॥ २.१६२.८

[धा॰ ४१ । उ॰ ५ | स्व॰ ७ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

।

सूक्तं (११)

१. उत नो गोषणिं धियमश्वसां वाजसामुत ।
नृवत्कृणुह्यूतये ॥ १५९३ ॥ ॥११ (यौ)॥ २.१६.३.१

[धा॰ २ । उ॰ नास्ति । स्व॰ नास्ति ।]

सूक्तं (१२)

१. शशमानस्य वा नरः स्वेदस्य सत्यशवसः ।
विदा कामस्य वेनतः ॥ १५९४ ॥ ॥१२ (व)॥ २.१६.३.२

[धा॰ ३ । उ॰ नास्ति । स्व॰ नास्ति ।]

सूक्तं (१३)

१. उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये ।
सुमृडीका भवन्तु नः ॥ १५९५ ॥ ॥१३ (रौ)॥ २.१६.३.३

[धा॰ ५ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (१४)

१. प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे ।
शुची उप प्रशस्तये ॥ १५९६ ॥ २.१६.३.४

२. पुनाने तन्वा मिथः स्वेन दक्षेण राजथः ।
ऊह्याथे सनादृतम् ॥ १५९७॥ २.१६.३.५

३. मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम् ।
परि यज्ञं नि षेदथुः ॥ १५९८ ॥ ॥१४ (का)॥ २.१६.३.६

[धा॰ ६ । उ॰ १ । स्व॰ २ ।]

सूक्तं (१५)

१. अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥ १५९९ ॥ २.१६.३.७

२. स्तोत्रꣳ राधानां पते गिर्वाहो वीर यस्य ते ।
विभूतिरस्तु सूनृता ॥ १६०० ॥ २.१६.३.८

३. ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो ।
समन्येषु ब्रवावहै ॥ १६०१॥ ॥१५ (ह)॥ २.१६.३.९

[धा॰ १६ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (१६)

१. गाव उप वदावटे महि यज्ञस्य रप्सुदा ।
उभा कर्णा हिरण्यया ॥ १६०२ ॥ २.१६.३.१०

२. अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
अवटस्य विसर्जने ॥ १६०३ ॥ २.१६.३.११

३. सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम् ।
नीचीनबारमक्षितम् ॥ १६०४ ॥ ॥१६ (रा)॥ २.१६.३.१२

[धा० ८ । उ० नास्ति | स्व० २ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१७)

१. मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।
महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ १६०५ ॥ २.१६.४.१

२. सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।
मध्वा सपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ १६०६ ॥ ॥१७ (वी)॥ २.१६.४.२

[धा० १० । उ० नास्ति । स्व० ४ ।]

## सूक्तं (१८)

१. इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ १६०७ ॥ २.१६.४.३

२. अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे ।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ १६०८ ॥ ॥१८ (रि)॥ २.१६.४.४

[धा॰ १८ । उ॰ नास्ति । स्व॰ ३ ।]



सूक्तं (१९)

१. यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥ १६०९ ॥ २.१६.४.५

२. तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यꣳ शवोऽस्मे स्वानास इन्दवः ॥ १६१० ॥ ॥१९ (त)॥ २.१६.४.६

[धा॰ १४ । उ॰ १ । स्व॰ १ ।]

सूक्तं (२०)

१. गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ १६११ ॥ २.१६.४.७

२. स नो हरीणां पत इन्दो देवप्सरस्तमः ।
सखेव सख्ये नर्यो रुचे भव ॥ १६१२ ॥ २.१६.४.८

३. सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम् ।
साह्वाꣳ इन्दो परि बाधो अप द्वयुम् ॥ १६१३॥ ॥२० (ल)॥ २.१६.४.९

[धा॰ ९ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (२१)

१. अञ्जते व्यञ्जते समञ्जते क्रतु२ रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षण२ हिरण्यपावाः पशुमप्सु गृभ्णते ॥ १६१४ ॥ २.१६.४.१०

२. विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति ।
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीडन्नसरद्वृषा हरिः ॥ १६१५॥ २.१६.४.११

३. अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः ।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥ १६१६॥ ॥२१ (ले)॥ २.१६.४.१२

[धा॰ ३९ । उ॰ नास्ति | स्व॰ ७ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

इति सप्तमप्रपाठके तृतीयोऽर्धः सप्तमः प्रपाठकश्च समाप्तः ॥ ७-३ ॥

इति षोडशोऽध्यायः ॥ १६ ॥

# अथ सप्तदशोऽध्यायः ॥

अथाष्टमप्रपाठके प्रथमोऽर्धः ॥ ८-१ ॥

(१-१४) १, ७ शुनःशेप आजीगर्तिः; २ मधिच्छन्दा वैश्वामित्रः; ३ शंयुर्बार्हस्पत्यः (तृणपाणीः); ४ वसिष्ठो मैत्रावरुणिः; ५ वामदेवो गौतमः; ६ रेभसूनू काश्यपौ; ८ नृमेध आंगिरसः; ९, ११ गोषूक्त्याश्वसूक्तिनौ काण्वायनौ ; १० श्रुतकक्षः सुकक्षो वा आङ्गिरसः; १२ विरूप आंगिरसः; १३ वत्सः काण्वः ॥ १, ३, ७, १२ अग्निः; २, ८-११, १३ इन्द्रः; ४ विष्णुः; ५ (१) वायु, ५ (२-३) इन्द्रवायू; ६ पवमानः सोमः ॥ १-२, ७, ९, १०, १२, १३ गायत्री; ३, ८ प्रगाथः = (विषमा बृहती , समा सतोबृहती); ४ त्रिष्टुप्; ५, ६ अनुष्टुप्; ११ उष्णिक् ॥

सूक्तं (१)

१. विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
चनो धाः सहसा यहो ॥ १६१७॥ २.१७.१.१

२. यच्चिद्धि शश्वता तना देवंदेवं यजामहे ।
त्वे इद्धूयते हविः ॥ १६१८॥ २.१७.१.२

३. प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः ।
प्रियाः स्वग्नयो वयम् ॥ १६१९ ॥ ॥१ (ही)॥ २.१७.१.३

[धा० ११ । उ० नास्ति । स्व० ४ ।]

सूक्तं (२)

१. इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः ॥ १६२० ॥ २.१७.१.४

२. सं नो वृषन्नमुं चरुꣳ सत्रादावन्नपा वृधि ।
अस्मभ्यमप्रतिष्कुतः ॥ १६२१ ॥ २.१७.१.५

३. वृषा यूथेव वꣳसगः कृष्टीरियर्त्योजसा ।
ईशानो अप्रतिष्कुतः ॥ १६२२ ॥ ॥२ (र)॥ २.१७.१.६

[धा॰ ८ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (३)

१. त्वं नश्चित्र ऊत्या वसो राधाꣳसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ १६२३ ॥ २.१७.१.७

२. पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेडाꣳसि दैव्या युयोधि नोऽदेवानि हराꣳसि च ॥ १६२४ ॥ ॥ ३ (क)॥ २.१७.१.८

[धा॰ ११ । उ॰ १ । स्व॰ ४ ।]

## सूक्तं (४)

१. किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ १६२५॥ २.१७.१.९

२. प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शꣳसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ १६२६॥ २.१७.१.१०

३. वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ १६२७ ॥ ॥४ (ते)॥ २.१७.१.११

[धा॰ ४४ । उ॰ १ | स्व॰ ७ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (५)

१. वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १६२८ ॥ २.१७.२.१

२. इन्द्रश्च वायवेषाꣳसोमानां पीतिमर्हथः ।
युवाꣳ हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ १६२९ ॥ २.१७.२.२

३. वायविन्द्रश्च शुष्मिणा सरथꣳ शवसस्पती ।
नियुत्वन्ता न ऊतय आ यातꣳसोमपीतये ॥ १६३०॥ ॥५ (ता)॥ २.१७.२.३

[धा॰ १९ । उ॰ १ । स्व॰ २ ।]

सूक्तं (६)

१. अध क्षपा परिष्कृतो वाजाꣳअभि प्र गाहसे ।
यदी विवस्वतो धियो हरिꣳहिन्वन्ति यातवे ॥ १६३१॥ २.१७.२.४

२. तमस्य मर्जयामसि मदो य इन्द्रपातमः ।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ १६३२ ॥ २.१७.२.५

३. तं गाथया पुराण्या पुनानमभ्यनूषत ।
उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥ १६३३ ॥ ॥६ (लु)॥ २.१७.२.६

[धा° १४ । उ° नास्ति । स्व° ५ ।]

सूक्तं (७)

१. अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ १६३४ ॥ २.१७.२.७

२. स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।
मीढ्वाꣳ अस्माकं बभूयात् ॥ १६३५ ॥ २.१७.२.८

३. स नो दूराच्चासाच्च नि मर्त्यादघायोः ।
पाहि सदमिद्विश्वायुः ॥ १६३६ ॥ ॥७ (टि)॥ २.१७.२.९

[धा° १३ । उ° १ । स्व° ३ ।]

सूक्तं (८)

१. त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ १६३७ ॥ २.१७.२.१०

२. अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ १६३८ ॥ ॥८ (टा)॥ २.१७.२.११

[धा° १८ । उ° ३ | स्व° २ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (९)

१. यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।
चक्राण ओपशं दिवि ॥ १६३९ ॥ २.१७.३.१

२. व्य३न्तरिक्षमतिरन्मदे सोमस्य रोचना ।
इन्द्रो यदभिनद्वलम् ॥ १६४० ॥ २.१७.३.२

३. उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः ।
अर्वाञ्चं नुनुदे वलम् ॥ १६४१ ॥ ॥९ (पी)॥ २.१७.३.३

[धा॰ २० । उ॰ १ । स्व॰ ४ ।]

## सूक्तं (१०)

१. त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
आ च्यावयस्यूतये ॥ १६४२ ॥ २.१७.३.४

२. युध्म॰ सन्तमनर्वाण॰ सोमपामनपच्युतम् ।
नरमवार्यक्रतुम् ॥ १६४३॥ २.१७.३.५

३. शिक्षा ण इन्द्र राय आ पुरु विद्वा॰ ऋचीषम ।
अवा नः पार्ये धने ॥ १६४४ ॥ ॥१० (ता)॥ २.१७.३.६

[धा॰ १४ । उ॰ १ । स्व॰ २ ।]

## सूक्तं (११)

१. तव त्यदिन्द्रियं बृहत्तव दक्षममुत क्रतुम् ।
वज्र॰ शिशाति धिषणा वरेण्यम् ॥ १६४५ ॥ २.१७.३.७

२. तव द्यौरिन्द्र पौ॰स्यं पृथिवी वर्धति श्रवः ।
त्वामापः पर्वतासश्च हिन्विरे ॥ १६४६ ॥ २.१७.३.८

३. त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः ।
त्वा॰ शर्धो मदत्यनु मारुतम् ॥ १६४७॥ ॥११ (ठी)॥ २.१९.३.९

[धा॰ १३ । उ॰ २ | स्व॰ ४ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१२)

१. नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
अमैरमित्रमर्दय ॥ १६४८ ॥ २.१७.४.१

२. कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् ।
उरुकृदुरु णस्कृधि ॥ १६४९ ॥ २.१७.४.२

३. मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा ।
संवर्ग॰ स॰ रयिं जय ॥ १६५० ॥ ॥१२ (प)॥ २.१७.४.३

[धा॰ १५ । उ॰ १ । स्व॰ १।]

## सूक्तं (१३)

१. समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
समुद्रायेव सिन्धवः ॥ १६५१ ॥ २.१७.४.४

२. वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना ।
वज्रेण शतपर्वणा ॥ १६५२ ॥ २.१७.४.५

३. ओजस्तदस्य तित्विष उभे यत्समवर्त्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥ १६५३ ॥ ॥१३ (तौ)॥ २.१७.४.६

[धा॰ १४ । उ॰ १ । स्व॰ नास्ति ।]

सूक्तं (१४)

१. सुमन्मा वस्वी रन्ती सूनरी ॥ १६५४॥ २.१७.४.७

२. सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि ।
ताविमा उप सर्पतः ॥ १६५५ ॥ २.१७.४.८

३. नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति ।
शृङ्गेभिर्दशभिर्दिशन् ॥ १६५६॥ ॥१४ (यि)॥ २.१७.४.९

[धा॰ ७ । उ॰ नास्ति | स्व॰ ३ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

इत्यष्टमप्रपाठकस्य प्रथमोऽर्धः ॥ ८-१ ॥

इति सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोऽध्यायः ।

अथाष्टमप्रपाठके द्वितीयोऽर्धः ॥ ८-२ ॥

(१-१९) १ मेध्यातिथिः काण्वः प्रियमेधश्चाङ्गिरसः; २ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; ३ शुनःशेप आजीगर्तिः; ४ शंयुर्बार्हस्पत्यः; ५ मेधातिथिः काण्वः; ६, ९ वसिष्ठो मैत्रावरुणिः; ७ वालखिल्यम् (आयुः काण्वः); ८ अम्बरिषो वार्षागिरः ऋजिश्वा भारद्वाजश्च; १० विश्वमना वैयश्वः; २२ सोभरिः काण्वः; १२ सप्तर्षयः (१ भरध्वाजो बार्हस्पयः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः); १३ कलिः प्रागाथः; १४, १७ विश्वामित्रः प्रागाथः; १५ मेध्यतिथिः काण्वः; १६ निध्रुविः काश्यपः; १८ भरद्वाजो बर्हस्पत्यः ॥ १-२, ४, ६-७, ९-१०, १३, १५ इन्द्रः; ३, ११, १८ अग्निः; ५ विष्णुः; ५ (६) देवो वा; ८, १२, १६ पवमानः सोमः; १४, १७ इन्द्राग्नी ॥ १-५, १४, १६-१८ गायत्री; ६, ७, ९, १२, १३ प्रगाथः = (विषमा बृहती , समा सतोबृहती); ८ अनुष्टुप्; १० उष्णिक्; ११ काकुभः प्रगाथः = (विषमा ककुप् , समा सतोबृहती); १५ बृहती ॥

सूक्तं (१)

१. पन्यंपन्यमित्सोतार आ धावत मद्याय ।
सोमं वीराय शूराय ॥ १६५७॥ २.१८.१.१

२. एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् ।
इन्द्रं गीर्भिर्गिर्वणसम् ॥ १६५८ ॥ २.१८.१.२

३. पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् ।
नि यमते शतमूतिः ॥ १६५९॥ ॥१ (ति)॥ २.१८.१.३

[धा॰ १४ । उ॰ १ । स्व॰ ३ ।]

सूक्तं (२)

१. आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
न त्वामिन्द्राति रिच्यते ॥ १६६० ॥ २.१८.१.४

२. विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे ।
य इन्द्र जठरेषु ते ॥ १६६१ ॥ २.१८.१.५

३. अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् ।
अरं धामभ्य इन्दवः ॥ १६६२ ॥ ॥२ (क)॥ २.१८.१.६

[धा॰ ११ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (३)

१. जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥ १६६३॥ २.१८.१.७

२. स नो महां अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
धिये वाजाय हिन्वतु ॥ १६६४ ॥ २.१८.१.८

३. स रेवां इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥ १६६५॥ २.१८.१.९

[धा॰ ११ । उ॰ नास्ति । स्व॰ १ ।]

सूक्तं (४)

१. तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
शं यद्गवे न शाकिने ॥ १६६६॥ २.१८.१.१०

२. न घा वसुर्नि यमते दानं वाजस्य गोमतः ।
यत्सीमुपश्रवद्गिरः ॥ १६६७ ॥ २.१८.१.११

३. कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् ।
शचीभिरप नो वरत् ॥ १६६८ ॥ ॥४ (फी)॥ २.१८.१.१२

[धा° १५ । उ° २ | स्व° ४ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (५)

१. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पाꣳसुले ॥ १६६९ ॥ २.१८.२.१

२. त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥ १६७० ॥ २.१८.२.२

३. विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥ १६७१ ॥ २.१८.२.३

४. तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १६७२॥ २.१६.२.४

५. तद्विप्रासो विपन्युवो जागृवा३ँसः समिन्धते ।
विष्णोर्यत्परमं पदम् ॥ १६७३ ॥ २.१८.२.५

६. अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्या अधि सानवि ॥ १६७४ ॥ ॥५ (ठू)॥ २.१८.२.६

[धा° २३ । उ° २ । स्व° ६।]

सूक्तं (६)

१. मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ १६७५ ॥ २.१८.२.७

२. इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।
इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥ १६७६ ॥ ॥६ (डी)॥ २.१८.२.८

[धा° १३ । उ° ४ । स्व° ४ ।]

सूक्तं (७)

१. अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ १६७७ ॥ २.१८.२.९

२. समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
स३ँशुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः ॥ १६७८॥ ॥७ (ठा)॥ २.१८.२.१०

[धा° १३ । उ° २ । स्व° २ ।]

सूक्तं (८)

१. इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥ १६७९ ॥ २.१८.२.११

२. त९ सखायः पुरूरुचं वयं यूयं च सूरयः ।
अश्याम वाजगन्ध्य९ सनेम वाजपस्त्यम् ॥ १५८० ॥ २.१८.२.१२

३. परि त्य९ हर्यत९ हरिं (बभ्रुं पुनन्ति वारेण । ।
यो देवान् विश्वा९ इत् परि मदेन सह गच्छति॥)* ॥ १६८१ ॥ ॥८ (हा)॥ २.१८.२.१३

[धा° १६ । उ° नास्ति । स्व° २ । ]

## सूक्तं (९)

१. कस्तमिन्द्र त्वा वस [वसो |आ] (त्वा वसवा मर्त्यो दधर्षति ।
श्रद्धा इत् ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥)* ॥ १६८२ ॥ २.१८.२.१४

२. मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ १६८३ ॥ ॥९ (यि)॥ २.१८.२.१४

[धा° १७ । उ° ना | स्व° ३ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

## सूक्तं (१०)

१. एदु मधोर्मदिन्तर९सिञ्चाध्वर्यो अन्धसः ।
एवा हि वीर स्तवते सदावृधः ॥ १६८४॥ २.१८.३.१

२. इन्द्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम् ।
उदानꣳश शवसा न भन्दना ॥ १६८५ ॥ २.१८.३.२

३. तं वो वाजानां पतिमहूमहि श्रवस्यवः ।
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ १६८६ ॥ ॥१० (क)॥ २.१८.३.३

[धा° १६ । उ° १ | स्व° १ ॥]

## सूक्तं (११)

१. तं गूर्द्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमूहिषे ॥ १६८७ ॥ २.१८.३.४

२. विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥ १६९८॥ ॥११ (या)॥ २.१८.३.५

[धा° १७ । उ° नास्ति । स्व° २ ।]

## सूक्तं (१२)

१. आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ १६८९ ॥ २.१८.३.६

२. स मामृजे तिरो अण्वानि मेष्यो मीढ्वांत्सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ १६९० ॥ ॥१२ (तु)॥ २.१८.३.७

[धा° १४ । उ° १ । स्व° ५ ।]

## सूक्तं (१३)

१. वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ १६९१ ॥ २.१८.३.८

२. वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥ १६९२॥ ॥१३ (खा)॥ २.१८.३.९

[धा° १६ । उ° २ । स्व° २ ।]

सूक्तं (१४)

१. इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।
तद्वां चेति प्र वीर्यम् ॥ १६९३ ॥ २.१८.३.१०

२. इन्द्राग्नी अपसस्परि (उप प्र यन्ति धीतयः ।
ऋतस्य पथ्या३ अनु ॥)* ॥ १६९४ ॥ २.१८.३.११

३. इन्द्राग्नी तविषाणि वाम् (सधस्थानि प्रयांसि च ।
युवोरप्तूर्यं हितम् ॥)* ॥ १६९५ ॥ ॥१४ (क)॥ २.१८.३.१२

[धा° ६ । उ° १ । स्व° १ ।]

सूक्तं (१५)

१. क ईं वेद सुते सचा (पिबन्तं कद् वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्रयन्धसः ॥)* ॥ १६९६ ॥ २.१८.३.१३

२. दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
न किष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ १६९७ ॥ २.१८.३.१४

३. य उग्रः सन्ननिष्टृतः स्थिरो रणाय स॒ंस्कृतः ।
यदि स्तोतुर्मघवा श्रृणवद्धवं नेन्द्रो योषत्या गमत् ॥ १६९८ ॥ ॥१३ (ही)॥ २.१८.३.१५

[धा॰ ११ । उ॰ नास्ति | स्व॰ ४ ॥]

सूक्तं (१६)

इति तृतीयः खण्डः ॥ ३ ॥

१. पवमाना असृक्षत सोमाः शुक्रास इन्दवः ।
अभि विश्वानि काव्या ॥ १६९९॥ २.१८.४.१

२. पवमाना दिवस्पर्यन्तरिक्षादसृक्षत ।
पृथिव्या अधि सानवि ॥ १७०० ॥ २.१८.४.२

३. पवमानास आशवः शुभ्रा असृग्रमिन्दवः ।
घ्नन्तो विश्वा अप द्विषः ॥ १७०१ ॥ ॥१६ (फ)॥ २.१८.४.३

[धा॰ १५ । उ॰ २ । स्व॰ १ ।]

सूक्तं (१७)

१. तोशा वृत्रहणा हुवे सजित्वानापराजिता ।
इन्द्राग्नी वाजसातमा ॥ १७०२ ॥ २.१८.४.४

२. प्र वामर्चन्त्युक्थिनः (नीथाविदो जरितारः ।
इन्द्राग्नी इष आ वृणे ॥)* ॥ १७०३ ॥ २.१८.४.५

३. इन्द्राग्नी नवतिं पुरो (दासपत्नीरधूनुतम् ।
साकमेकेन कर्मणा ॥)* ॥ १७०४ ॥ ॥१७ (र)॥ २.१८.४.६

[धा॰ ८ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (१८)

१. उप त्वा रण्वसन्दृशं प्रयस्वन्तः सहस्कृत ।
अग्ने ससृज्महे गिरः ॥ १७०५ ॥ २.१८.४.७

२. उप च्छायामिव घृणेरगन्म शर्म ते वयम् ।
अग्ने हिरण्यसन्दृशः ॥ १७०६ ॥ २.१८.४.८

३. य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः ।
अग्ने पुरो रुरोजिथ ॥ १७०७॥ ॥१८ (य)॥ २.१८.४.९

[धा॰ ७ । उ॰ नास्ति । स्व॰ १ ।]

## सूक्तं (१९)

१. ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं घर्ममीमहे ॥ १७०८ ॥ २.१८..४.१०

२. य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन् ।
ऋतूनुत्सृजते वशी ॥ १७०९॥ २.१८.४.११

३. अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य ।
सम्राडेको वि राजति ॥ १७१०॥ ॥१९ (का)॥ २.१८.४.१२

# अथैकोनविंशोऽध्यायः ॥

अथाष्टमप्रपाठके तृतीयोऽर्धः ॥ ८-३ ॥

(१-१८ ) १ विरूप आङ्गिरसः; २, १८ अवत्सरः काश्यपः; ३ विश्वामित्रो गाथिनः; ४ देवातिथिः काण्वः; ५, ८, ९, १६ गोतमो राहूगणः; ६ वामदेवो गौतमः; ७ प्रस्कण्वः काण्वः; १० वसुश्रुत आत्रेयः; ११ सत्यश्रवा आत्रेयः; १२ अवस्युरात्रेयः; १३ बुधगविष्टिरावात्रेयौ; १४ कुत्स आङ्गिरसः; १६ अत्रिर्भौमः; १७ दीर्घतमा औचथ्यः ॥ १, १०, १३ अग्निः; २, १८ पवमानः सोमः; ३-५ इन्द्रः; ६, ८, ११, १४ (१ उत्तरार्धः रात्रिश्च), १६ उषाः; ७, ९, १२, १५, १७ अश्विनौ ॥ १-२, ६-७, १८ गायत्री; ३, १३-१५ त्रिष्टुप्; ४, ५ प्रगाथः = (विषमा बृहती , समा सतोबृहती); ८-९ उष्णिक् १०-१२ पङ्क्तिः; १६, १७ जगती ॥

सूक्तं (१)

१. अग्निः प्रत्नेन जन्मना शुम्भानस्तन्व३ँ स्वाम् ।
कविर्विप्रेण वावृधे ॥ १७११॥ २.१९.१.१

२. ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम् ।
अस्मिन्यज्ञे स्वध्वरे ॥ १७१२ ॥ २.१९.१.२

३. स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा ।
देवैरा सत्सि बर्हिषि ॥ १७१३॥ ॥१ (ली)॥ २.१९.१.३

[धा० ९ । उ० नास्ति । स्व० ४ ।]

सूक्तं (२)

१. उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः ।
नुदस्व याः परिस्पृधः ॥ १७१४ ॥ २.१९.१.४

२. अया निजघ्निरोजसा रथसङ्गे धने हिते ।
स्तवा अबिभ्युषा हृदा ॥ १७१५ ॥ २.१९.१.५

३. अस्य व्रतानि नाधृषे पवमानस्य दूढ्या ।
रुज यस्त्वा पृतन्यति ॥ १७१६ ॥ २.१९.१.६

४. तं॰ हिन्वन्ति मदच्युतं॰ हरिं नदीषु वाजिनम् ।
इन्दुमिन्द्राय मत्सरम् ॥ १७१७ ॥ ॥२ (पी)॥ २.१९.१.७

[धा॰ २० । उ॰ १ । स्व॰ ४ ।]

सूक्तं (३)

१. आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ॰ इहि ॥ १७१८ ॥ २.१९.१.८

२. वृत्रखादो वलं॰ रुजः पुरां दर्मो अपामजः ।
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढा चिदारुजः ॥ १७१९॥ २.१९.१.९

३. गम्भीराँ॰ उदधीँ॰रिव क्रतुं पुष्यसि गा इव ।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥ १७२०॥ ॥ ३ (छा)॥ २.१९.१.१०

[धा॰ १७ । उ॰ २ । स्व॰ २ ।]

सूक्तं (४)

१. यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ १७२१ ॥ २.१६.१.११

२. मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते ।
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥ १७२२ ॥ ॥४ (घ)॥ २.१९.१.१२

[धा॰ २१ । उ॰ ४ । स्व॰ १ ।]

सूक्तं (५)

१. त्वमङ्ग प्र शꣳसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ १७२३ ॥ २.१६.१.१३

२. मा ते राधाꣳसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥ १७२४ ॥ ॥५ (का)॥ २.१९.१.१४

[धा॰ २१ । उ॰ १ | स्व॰ २ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (६)

१. प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः ।
दिवो अदर्शि दुहिता ॥ १७२५ ॥ २.१९.२.१

२. अश्वेव चित्रारुषी माता गवामृतावरी ।
सखा भूदश्विनोरुषाः ॥ १७२६ ॥ २.१९.२.२

३. उत सखास्यश्विनोरुत माता गवामसि ।
उतोषो वस्व ईशिषे ॥ १७२७ ॥ ॥६ (लि)॥ २.१९.२.३

[धा॰ ९ । उ॰ नास्ति । स्व॰ ३ ।]

सूक्तं (७)

१. एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
स्तुषे वामश्विना बृहत् ॥ १७२८॥ २.१९.२.४

२. या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।
धिया देवा वसुविदा ॥ १७२९ ॥ २.१९.२.५

३. वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि ।
यद्वा॒ रथो विभिष्पतात् ॥ १७३० ॥ ॥७ (लि)॥ २.१९.२.६

[धा॰ १४ । उ॰ नास्ति । स्व॰ ३ ।]

सूक्तं (८)

१. उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥ १७३१ ॥ २.१९.२.७

२. उषो अद्येह गोमत्यश्वावति विभावरि ।
रेवदस्मे व्युच्छ सूनृतावति ॥ १७३२ ॥ २.१९.२.८

३. युङ्क्ष्वा हि वाजिनीवत्यश्वा॒ अद्यारुणा॒ उषः ।
अथा नो विश्वा सौभगान्या वह ॥ १७३३ ॥ ॥८ (हि)॥ २.१९.२.९

[धा॰ ६ । उ॰ नास्ति । स्व॰ ३ ।]

सूक्तं (९)

१. अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
अर्वाग्रथꣳ समनसा नि यच्छतम् ॥ १७३४ ॥ २.१९.२.१०

२. एह देवा मयोभुवा दस्रा हिरण्यवर्त्तनी ।
उषर्बुधो वहन्तु सोमपीतये ॥ १७३५ ॥ २.१९.२.११

३. यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
आ न ऊर्जं वहतमश्विना युवम् ॥ १७३६ ॥ ॥९ (भा)॥ २.१९.२.१२

[धा॰ २० । उ॰ ४ | स्व॰ २ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (१०)

१. अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषꣳ स्तोतृभ्य आ भर ॥ १७३७ ॥ २.१९.३.१

२. अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवꣳ स प्रीतो याति वार्यमिषꣳस्तोतृभ्य आ भर ॥ १७३८ ॥ २.१९.३.२

३. सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सꣳ सुजातासः सूरय इषꣳ स्तोतृभ्य आ भर ॥ १७३९ ॥ ॥१० (घु)॥
२.१९.३.३

[धा॰ १६ । उ॰ ४ । स्व॰ ५ ।]

## सूक्तं (११)

१. महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १७४० ॥ २.१९.३.४

२. या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १७४१॥ २.१९.३.५

३. सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १७४२ ॥ ॥११ (तु)॥ २.१९.३.६

[धा॰ १९ । उ॰ १ । स्व॰ ५ ।]

## सूक्तं (१२)

१. प्रति प्रियतम२ं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुत२ं हवम् ॥ १७४३ ॥ २.१९.३.७

२. अत्यायातमश्विना तिरो विश्वा अह२ं सना ।
दस्रा हिरण्यवर्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुत२ं हवम् ॥ १७४४ ॥ २.१९.३.८

३. आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुत२ं हवम् ॥ १७४५॥ ॥१२ (वा)॥
२.१९.३.९

[धा॰ ३० । उ॰ नास्ति | स्व॰ २ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

सूक्तं (१३)

१. अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥ १७४६ ॥ २.१९.४.१

२. अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥ १७४७ ॥ २.१९.४.२

३. यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ १७४८ ॥ ॥१३ (लि)॥ २.१९.४.३

[धा॰ १९ । उ॰ नास्ति । स्व॰ ३ ।]

सूक्तं (१४)

१. इद१ँश्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूतासवितुः सवायैवा रात्र्युषसे योनिमारैक् ॥ १७४९ ॥ २.१९.४.४

२. रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ १७५० ॥ २.१९.४.५

३. समानो अध्वा स्वस्रोरनंतस्तमन्यान्या चरतो देवशिष्टे ।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ १७५१ ॥ ॥१४ (म)॥ २.१९.४.६

[धा॰ ३० । उ॰ ५ । स्व॰ १ ।]

## सूक्तं (१५)

१. आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनꣳ रथ्येह यातं पीपिवाꣳसमश्विना घर्ममच्छ ॥ १७५२ ॥ २.१९.४.७

२. न सꣳस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्त्तिं दाशुषे शम्भविष्ठा ॥ १७५३ ॥ २.१९.४.८

३. उता यातꣳ संगवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततान ॥ १७५४॥ ॥१५ (लो)॥ २.१९.४.९

[धा॰ २४ । उ॰ नास्ति | स्व॰ ९ ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१६)

१. एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १७५५ ॥ २.१९.५.१

२. उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥ १७५६ ॥ २.१९.५.२

३. अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ १७५७ ॥ ॥१६ (कि)॥ २.१९.५.३

[धा॰ २६ । उ॰ १ । स्व॰ ३ ।]

## सूक्तं (१७)

१. अबोध्यग्निर्ज्म उदेति सूर्यो व्यू३षाश्चन्द्रा मह्यावो अर्चिषा ।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ १७५८ ॥ २.१९.५.४

२. यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ १७५९॥ २.१९.५.५

३. अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥ १७६० ॥ ॥१७ (छा)॥ २.१९.५.६

[धा॰ २२ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (१८)

१. प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः ।
अच्छा वाजꣳ सहस्रिणम् ॥ १७६१ ॥ २.१९.५.७

२. अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति ।
हरिस्तुञ्जान आयुधा ॥ १७६२ ॥ २.१९.५.८

३. स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।
श्येनो न वꣳसु षीदति ॥ १७६३॥ २.१९.५.९

४. स नो विश्वा दिवो वसूतो पृथिव्या अधि ।
पुनान इन्दवा भर ॥ १७६४ ॥ ॥१८ (ती)॥ २.१९.५.१०

[धा॰ १४ । उ॰ १ | स्व॰ ४ ॥]

# अथ विंशोऽध्यायः ॥

अथ नवमप्रपाठके प्रथमोऽर्धः ॥ ९-१ ॥

(१-१८) १ नृमेध आङ्गिरसः; २-३ प्रियमेध आङ्गिरसः; ४ दीर्घतमा औचथ्यः; ५ वामदेवो गौतमः; ६ प्रस्कण्वः काण्वः; ७ बृहदुक्थो वामदेव्यः; ८ बिन्दुः पूतदक्षो वा आंगिरसः; ९, १७ जमदग्निर्भार्गवः; १० सुकक्ष आंगिरसः; ११-१३ वसिष्ठो मैत्रावरुणिः; १४ सुदाः पैजवनः; १५ मेधातिथिः काण्वः; १६ नीपातिथिः काण्वः; १८ परुच्छेपो दैवो दासिः ॥ १, १७ पवमानः सोमः; ३, ७, १०, १६ इन्द्रः; ४-६, १८ अग्निः; ९ मरुतः; १० सुर्यः २ - - - ॥ १, ८, १०, १५-१७ गायत्री; (१७ नित्यपदा) २ - - - ३ अनुष्टुम्मुखः प्रगाथः = (१ अनुष्टुप् + गायत्र्यौ ); ४, ११, १३ विराट्; ५ पदपंक्तिः; ६, ९, १२ प्रगाथः = (विषमा बृहती , समा सतोबृहती); ७ त्रिष्टुप्; १४ शक्करी;१८ अत्यष्टिः ॥

## सूक्तं (१)

१. प्रास्य धारा अक्षरन्वृष्णः सुतस्याजसः ।
देवाँ अनु प्रभूषतः ॥ १७६५ ॥ २.२०.१.१

२. सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा ।
ज्योतिर्जज्ञानमुक्थ्यम् ॥ १७६६ ॥ २.२०.१.२

३. सुषहा सोम तानि ते पुनानाय प्रभूवसो ।
वर्धा समुद्रमुक्थ्य ॥ १७६७॥ ॥१ (यि)॥ २.२०.१.३

[धा० १२ । उ० नास्ति । स्व० ३ ।]

## सूक्तं (२)

१. एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ १७६८ ॥ २.२०.१.४

२. त्वामिच्छवसस्पते यन्ति गिरो न संयतः ॥ १७६९ ॥ २.२०.१.५

३. वि स्रुतयो यथा पथः (इन्द्र त्वद्यन्तु रातयः ॥)* ॥ १७७० ॥ ॥२ (प)॥ २.२०.१.६

[धा० ५ । उ० १ । स्व० १ ।]

### सूक्तं (३)

१. आ त्वा रथं यथोतये (सुम्नाय वर्त्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्रं शविष्ठं सत्पतिम् ॥)* ॥ १७७१ ॥ २.२०.१.७

२. तुविशुष्म तुविक्रतो शचीवो विश्वया मते ।
आ पप्राथ महित्वना ॥ १७७२ ॥ २.२०.१.८

३. यस्य ते महिना महः परि ज्मायन्तमीयतुः ।
हस्ता वज्र२ं हिरण्ययम् ॥ १७७३॥ ॥ ३ (व)॥ २.२०.१.९

[धा० ११ । उ० नास्ति । स्व० १ ।]

### सूक्तं (४)

१. आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा ।
सूरो न रुरुक्वाञ्छतात्मा॥ १७७४॥ २.२०.१.१०

२. अभि द्विजन्मा त्री रोचनानि विश्वा रजा२ंसि शुशुचानो अस्थात् ।
होता यजिष्ठो अपा२ं सधस्थे ॥ १७७५ ॥ २.२०.१.११

३. अयꣳ स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
मर्तो यो अस्मै सुतुको ददाश ॥ १७७६ ॥ ॥ ॥४ (छ)॥ २.२०.१.१२

[धा° १२ । उ° २ । स्व° १ ।]

सूक्तं (५)

१. अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् ।
ऋध्यामा त ओहैः ॥ १७७७॥ २.२०.१.१३

२. अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥ १७७८॥ २.२०.१.१४

३. एभिर्नो अर्कैर्भवा नो अर्वाङ्क स्व३र्णज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः ॥ १७७९ ॥ ॥५ (चि)॥ २.२०.१.१५

[धा° ७ । उ° १ | स्व° ३ ॥]

इति प्रथमः खण्डः ॥ १ ॥

सूक्तं (६)

१. अग्ने विवस्वदुषसश्चित्रꣳ राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाꣳ उषर्बुधः ॥ १७८०॥ २.२०.२.१

२. जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सवीर्यमस्मे धेहि श्रवो बृहत् ॥ १७८१ ॥ ॥६ (ला)॥ २.२०.२.२

[धा॰ ९ । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (७)

१. विधुं दद्राणꣳ समने बहूनां युवानꣳ सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ १७८२ ॥ २.२०.२.३

२. शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः ।
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता॥ १७८३॥ २.२०.२.४

३. ऐभिर्ददे वृष्ण्या पौꣳस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।
ये कर्मणः क्रियमाणस्य मह्न ऋते कर्ममुदजायन्त देवाः ॥ १७८४ ॥ ॥७ (घे)॥ २.२०.२.५

[धा॰ ३१ । उ॰ ४ । स्व॰ ७ ।]

सूक्तं (८)

१. अस्ति सोमो अयꣳ सुतः पिबन्त्यस्य मरुतः ।
उत स्वराजो अश्विना ॥ १७८५ ॥ २.२०.२.६

२. पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः ।
त्रिषधस्थस्य जावतः ॥ १७८६ ॥ २.२०.२.७

३. उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः ।
प्रातर्होतेव मत्सति ॥ १७८७ ॥ ॥८ (ली)॥ २.२०.२.८

[धा॰ ९ । उ॰ नास्ति । स्व॰ ४ ।]

सूक्तं (९)

१. बण्महाँ॒ असि सूर्य बडादित्य महाँ॒ असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ॒ असि ॥ १७८८ ॥ २.२०.२.९

२. बट् सूर्य श्रवसा महाँ॒ असि सत्रा देव महाँ॒ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ १७८९ ॥ ॥९ (त)॥ २.२०.२.१०

[धा॰ १४ । उ॰ १ | स्व॰ १ ॥]

इति द्वितीयः खण्डः ॥ २ ॥

सूक्तं (१०)

१. उप नो हरिभिः सुतं याहि मदानां पते ।
उप नो हरिभिः सुतम् ॥ १७९० ॥ २.२०.३.१

२. द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः ।
उप नो हरिभिः सुतम् ॥ १७९१ ॥ २.२०.३.२

३. त्वँ॒ हि वृत्रहन्नेषां पाता सोमानामसि ।
उप नो हरिभिः सुतम् ॥ १७९२ ॥ ॥१० (री)॥ २.२०.३.३

[धा॰ १३ । उ॰ नास्ति । स्व॰ ४ ।]

सूक्तं (११)

१. प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ १७९३ ॥ २.२०.३.४

२. उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।
तस्य व्रतानि न मिनन्ति धीराः ॥ १७९४॥ २.२०.३.५

३. इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।
हर्यश्वाय बर्हया समापीन् ॥ १७९५ ॥ ॥११ (हि)॥ २.२०.३.६

[धा॰ २६ । उ॰ नास्ति । स्व॰ ३ ।]

## सूक्तं (१२)

१. यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय र॰सिषम् ॥ १७९६ ॥ २.२०.३.७

२. शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न ॥ १७९७॥ ॥१२ (ता)॥ २.२०.३.८

[धा॰ १४ । उ॰ १ । स्व॰ २ ।]

## सूक्तं (१३)

१. श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवा॰स्यन्तमा सचेमा ॥ १७९८॥ २.२०.३.९

२. न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ १७९९ ॥ २.२०.३.१०

३. भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।
मारे अस्मन्मघवञ्ज्योक्कः ॥ १८०० ॥ ॥ १३ (बा)॥ २.२०.३.११

[धा॰ १५ । उ॰ ३ | स्व॰ २ ॥]

इति तृतीयः खण्डः ॥ ३ ॥

## सूक्तं (१४)

१. प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा ।
अस्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १८०१ ॥ २.२०.४.१

२. त्वं॰ सिन्धूं॰ रवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् ।
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १८०२ ॥ २.२०.४.२

३. वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघां॰सति ।
या ते रातिर्ददिवसु नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १८०३ ॥ ॥१४ (टि)॥ २.२०.४.३

[धा॰ ४३ । उ॰ ६ । स्व॰ ३ ।]

## सूक्तं (१५)

१. रेवां॰ इद्रेवत स्तोता स्यात्त्वावतो मघोनः ।
प्रेदु हरिवः सुतस्य ॥ १८०४ ॥ २.२०.४.४

२. उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
न गायत्रं गीयमानम् ॥ १८०५ ॥ २.२०.४.५

३. मा न इन्द्र पीयत्नवे मा शर्धते परा दाः ।
शिक्षा शचीवः शचीभिः ॥ १८०६ ॥ ॥१५ (ति)॥ २.२०.४.६

[धा० १४ । उ० १ । स्व० ३ ।]

## सूक्तं (१६)

१. एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १८०७॥ २.२०.४.७

२. अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १८०८ ॥ २.२०.४.८

३. आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १८०९॥ ॥१६ (व)॥ २.२०.४.९

[धा० ५ । उ० नास्ति । स्व० १ ।]

## सूक्तं (१७)

१. पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १८१० ॥ २.२०.४.१०

२. ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥ १८११॥ २.२०.४.११

३. असृग्रं देववीतये वाजयन्तो रथा इव ॥ १८१२॥ ॥१७ (रौ)॥ २.२०.४.१२

[धा० ८ । उ० नास्ति | स्व० नास्ति ॥]

इति चतुर्थः खण्डः ॥ ४ ॥

## सूक्तं (१८)

१. अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनु
सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वरो स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ १८१३ ॥ २.२०.५.१

२. यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां
विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः ।
परिज्मानमिव द्याꣳ होतारं चर्षणीनाम् ।
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ १८१४ ॥ २.२०.५.२

३. स हि पुरू चिदोजसा विरुक्मता दीद्यानो
भवति द्रुहन्तरः परशुर्न द्रुहन्तरः ।
वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।
निष्षहमाणो यमते नायते धन्वासहा नायते ॥ १८१५ ॥ ॥१८ (ठी)॥ २.२०.५.३

[धा॰ ४३ । उ॰ २ | स्व॰ ४ ॥]

इति नवमप्रपाठके प्रथमोऽर्धः ॥

अथ नवमप्रपाठके द्वितीयोऽर्धः ॥ ९-२ ॥

(१-१३) १ अग्निः पावकः; २ सोभरिः काण्वः; ३ अरुणो वैतहव्यः; ५-६ अवत्सारः काश्यपः; ९ गोषूक्त्यश्वसुक्तिनौ काण्वायनौ; १० त्रिशिरात्वाष्ट्रः सिन्धुद्वीप आम्बरीषो वा;११ उलो वातायनः; १३ वेनो भार्गवः ॥ ४, ७, ८, १२ । १-४; ७-८, १२ अग्निः; ५-६ विश्वे देवाः; ९ इन्द्रः; १० आपः; ११ वायुः; १३ वेनः ॥ १ (१-२) विष्टारपंक्तिः; १ (३-५) सतोबृहती; १ (६) उपरिष्टाज्ज्योतिः; २ काकुभः प्रगाथः = (विषमा ककुप्, समा सतोबृहती); ३ जगती; ५-६, १३ त्रिष्टुप्; ४, ७-११ गायत्री; ४, ७, ८, १२ । ॥

## सूक्तं (१)

१. अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्या२३ दधासि दाशुषे कवे ॥ १८१६॥ २.२०.५.४

२. पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ १८१७॥ २.२०.५.५

३. ऊर्जो नपाज्ञातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्षसश्चित्रोतयो वामजाताः ॥ १८१८ ॥ २.२०.५.६

४. इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्रतुम् ॥ १८१९ ॥ २.२०.५.७

५. इष्कर्त्तारमध्वरस्य प्रचेतसं क्षयन्त२ राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसि२ रयिम् ॥ १८२० ॥ २.२०.५.८

६. ऋतावानं महिषं विश्वदर्शतमग्नि२ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्ण२ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ १८२१॥ ॥१ (दि)॥ २.२०.५.९

[धा॰ ५९ । उ॰ ३ | स्व॰ ३ ॥]

इति पञ्चमः खण्डः ॥ ५ ॥

## सूक्तं (२)

१. प्र सो अग्ने तवोतिभिः सुविराभिस्तरति वाजकर्मभिः ।
यस्य त्व२ सख्यमाविथ ॥१ ॥ ॥ १८२२ ॥ २.२०.६.१

२. तव द्रप्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा ददे ।
त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥ १८२३ ॥ ॥२ (यी)॥ २.२०.६.२

[धा° १२ । उ° नास्ति । स्व° ४ । ]

सूक्तं (३)

१. तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।
तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ १८२४ ॥ ॥ ३ (रि)॥ २.२०.६.३

[धा° ७ । उ° नास्ति । स्व° २ ।]

सूक्तं (४)

१. अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति ।
महिषीव वि जायते ॥ १८२५ ॥ ॥४ (या)॥ २.२०.६.४

[धा° ७ । उ° नास्ति । स्व° २ ।]

सूक्तं (५)

१. यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमय१ँ सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १८२६ ॥ ॥५ (या)॥ २.२०.६.५

[धा° ७ । उ° नास्ति । स्व° २ ।]

सूक्तं (६)

१. अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति ।
अग्निर्जागार तमय२ सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १८२७ ॥ ॥६ (वा)॥ २.२०.६.६

[धा० १० । उ० नास्ति । स्व० २ ]

## सूक्तं (७)

१. नमः सखिभ्यः पूर्वसद्भ्यो नमः साकन्निषेभ्यः ।
युञ्जे वाच२ शतपदीम् ॥ १८२८ ॥ २.२०.६.७

२. युञ्जे वाच२ शतपदीं गाये सहस्रवर्तनि ।
गायत्रं त्रैष्टुभं जगत् ॥ १८२९ ॥ २.२०.६.८

३. गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता ।
देवा ओका२सि चक्रिरे ॥ १८३०॥ ॥७ (यु)॥ २.२०.६.९

[धा० १२ । उ० नास्ति । स्व० ५ ।]

## सूक्तं (८)

१. अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः ।
सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ १८३१ ॥ २.२०.६.१०

२. पुनरूर्जा नि वर्त्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्य२हसः ॥ १८३२॥ २.२०.६.११

३. सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥ १८३३॥ ॥८ (ठा)॥ २.२०.६.१२

[धा॰ ८ । उ॰ २ | स्व॰ २ ॥]

इति षष्ठः खण्डः ॥ ६ ॥



सूक्तं (९)

१. यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।
स्तोता मे गोसखा स्यात् ॥ १८३४ ॥ २.२०.७.१

२. शिक्षेयमस्मै दित्सेयँ शचीपते मनीषिणे ।
यदहं गोपतिः स्याम् ॥ १८३५ ॥ २.२०.७.२

३. धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।
गामश्वं पिप्युषी दुहे ॥ १८३६ ॥ ॥९ (पि)॥ २.१६.७.३

[धा॰ १५ । उ॰ १ । स्व॰ ३ ।]

सूक्तं (१०)

१. आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥ १८३७ ॥ २.२०.७.४

२. यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ १८३८ ॥ २.२०.७.५

३. तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ १८३९ ॥ ॥१० (वा)॥ २.२०.७.६

[धा॰ १० । उ॰ नास्ति । स्व॰ २ ।]

सूक्तं (११)

१. वात आ वातु भेषजꣳ शम्भु मयोभु नो हृदे ।
प्र न आयूꣳषि तारिषत् ॥ १८४० ॥ २.२०.७.७

२. उत वात पितासि न उत भ्रातोत नः सखा ।
स नो जीवातवे कृधि ॥ १८४१ ॥ २.२०.७.८

३. यददो वात ते गृहे३ऽमृतं निहितं गुहा ।
तस्य नो धेहि जीवसे ॥ १८४२॥ ॥११ (पौ)॥ २.२०.७.९

[धा॰ १० । उ॰ १ । स्व॰ नास्ति ।]

सूक्तं (१२)

१. अभि वाजी विश्वरूपो जनित्रꣳ हिरण्ययं बिभ्रदत्कꣳ सुपर्णः ।
सूर्यस्य भानुमृतुथा वसानः परि स्वयं मेधमृज्रो जजान ॥ १८४३ ॥ २.२०.७.१०

२. अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि यत्सम्बभूव ।
अन्तरिक्षे स्वं महिमानं मिमानः कनिक्रन्ति वृष्णो अश्वस्य रेतः ॥ १८४४॥ २.२०.७.११

३. अयꣳ सहस्रा परि युक्ता वसानः सूर्यस्य भानुं यज्ञो दाधार ।
सहस्रदाः शतदा भूरिदावा धर्त्ता दिवो भुवनस्य विश्पतिः ॥ ३ ॥ ॥ १८४५॥ ॥१२ (पु)॥
२.२०.७.१२

[धा॰ २० । उ॰ १ । स्व॰ ५ ।]

## सूक्तं (१३)

१. नाके सुपर्णमुप यत्पतन्त२ हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ १८४६ ॥ २.२०.७.१३

२. ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्क२ सुरभिं दृशे क२ स्वा३र्ण नाम जनत प्रियाणि ॥ १८४७॥ २.२०.७.१४

३. द्रप्सः समुद्रमभि यज्जिगाति पश्यन्गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ १८४८॥ ॥१३ (खु)॥ २.२०.७.१५

[धा० २३ । उ० २ | स्व० ५ ॥]

इति सप्तमः खण्डः ॥ ७ ॥

इति नवमप्रपाठकस्य द्वितीयोऽर्धः ॥

इथि विंशोऽध्यायः ॥ २० ॥

# अथैकविंशोऽध्यायः ॥

अथ नवमप्रपाठके तृतीयोऽर्धः ॥ ९-३ ॥

(१-९) १-४, ५ (१०२) अप्रतिरथ ऐन्द्रः; ५ (३), ६ (३), ८ (१, ३) पायुर्भारध्वाजः; ७ (१-२) ज्ञासो भारध्वाजः; ९ (१) जय ऐन्द्रः , ९ (२-३) गोतमो राहूगणः; ४ (३), ६ (१-२) - - - , ७ (३) - - - , ८ (२) - - - ॥ १, २ (२-३), ३-४, ५ (२), ६,७, ९ (१) इन्द्रः; ८ (२) इन्द्रो मरुतो वा; २ (१) बृहस्पतिः; ५ (१) अप्वा देवी; ५ (३) इषवः; ६ (३) (संग्रामाशिषः) युद्धभूमि-कवचब्राह्मणस्पत्यादितयः; ८ (१, ३ [संग्रामासिषः १ वर्म-सोम-वरुणाः; ३ देवब्रह्माणि]; ९ सोमावरुणौ (२-३) विश्वे देवाः; ८ (३) - - - ॥ ३ ॥ ॥ १-४, ५ (१), ६ (१), ८ (१), ९ (१-२) त्रिष्टुप्; ५ (२-३), ६ (२), ७ (१-२), ८ (२) अनुष्टुप्; ६ (३) पंक्तिः; ९ (३) विराट् स्थानाः; ७(३) विराट् जगती; ८ (२) - - - ॥

सूक्तं (१)

१. आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
सङ्क्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ॥ १८४९ ॥ २.२१.१.१

२. सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ १८५० ॥ २.२१.१.२

३. स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन ।
सꣳ सृष्टजित्सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिरस्ता ॥ ॥ १८५१॥ ॥१ (फे)॥ २.२१.१.३

[धा॰ ४० । उ॰ २ । स्व॰ ७ ।]

सूक्तं (२)

१. बृहस्पते परि दीया रथेन रक्षोहामित्रा२ँ अपबाधमानः ।
प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ १८५२ ॥ २.२१.१.४

२. बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ १८५३ ॥ २.२१.१.५

३. गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमँ२ सजाता अनु वीरयध्वमिन्द्र२ँ सखायो अनु सँ२ रभध्वम् ॥ १८५४ ॥ ॥२ (हे)॥ २.२१.१.६

[धा० ३६ । उ० नास्ति । स्व० ७ ।]

## सूक्तं (३)

१. अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडुयुध्यो३ऽस्माकँ२ सेना अवतु प्र युत्सु ॥ १८५५ ॥ २.२१.१.७

२. इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ १८५६ ॥ २.२१.१.८

३. इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताँ२ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ १८५७॥ ॥ ३ (च)॥ २.२१.१.९

[धा० २७ । उ० १ । स्व० १ ।]

## सूक्तं (४)

१. उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाँ२सि ।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १८५८॥ २.२१.१.१०

२. अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मा॰ उ देवा अवता हवेषु ॥ १८५९ ॥ २.२१.१.११

३. असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना ।
तां गूहत तमसापव्रतेन यथैतेषामन्यो अन्यं न जानात् ॥ १८६० ॥ ॥४ (चु)॥ २.२१.१.१२

[धा॰ ३२ । उ॰ १ । स्व॰ ५ ।]

## सूक्तं (५)

१. अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १८६१ ॥ २.२१.१.१३

२. प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १८६२ ॥ २.२१.१.१४

३. अवसृष्टा परा पत शरव्ये ब्रह्मस॰शिते ।
गच्छामित्रान्प्र पद्यस्व मामीषां कं च नोच्छिषः ॥ १८६३ ॥ ॥५ (ठा)॥ २.२१.१.१५

[धा॰ १८ । उ॰ २ । स्व॰ २ ।]

## सूक्तं (६)

१. कङ्काः सुपर्णा अनु यन्त्वेनान्गृध्राणामन्नमसावस्तु सेना ।
मैषां मोच्यघहारश्च नेन्द्र वया॰स्येनाननुसंयन्तु सर्वान् ॥ १८६४॥ २.२१.१.१६

२. अमित्रसेनां मघवन्नस्माञ्छत्रुयतीमभि ।
उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥ १८६५ ॥ २.२१.१.१७

३. यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ।
तत्र नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ १८६६ ॥ ॥६ (या)॥ २.२१.१.१८

[धा॰ २७ । उ॰ नास्ति । स्व॰ २ ।]

## सूक्तं (७)

१. वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥ १८६७ ॥ २.२१.१.१९

२. वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्मा॒ अभिदासत्यधरं गमया तमः ॥ १८६८ ॥ २.२१.१.२०

३. इन्द्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ ।
तौ युञ्जीत प्रथमौ योग आगते याभ्यां जितमसुराणा॒ सहो महत् ॥ १८६९ ॥ ॥७ (थि)॥ २.२१.१.२१

[धा॰ २९ । उ॰ २ । स्व॰ ३ ।]

## सूक्तं (८)

१. मर्माणि ते वर्मणा च्छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ १८७० ॥ २.२१.१.२२

२. अन्धा अमित्रा भवताशीर्षाणोऽहय इव ।
तेषां वो अग्निनुन्नानामिन्द्रो हन्तु वरंवरम् ॥ १८७१ ॥ २.२१.१.२३

३. यो नः स्वोऽरणो यश्च निष्ट्यो जिघा॒सति ।
देवास्त॒ सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तर॒ शर्म वर्म ममान्तरम् ॥ १८७२ ॥ ॥८ (वी)॥ २१.१.२४

[धा॰ २५ । उ॰ नास्ति । स्व॰ ४ ।]

सूक्तं (९)

१. मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रूं ताढि वि मृधो नुदस्व ॥ १८७३॥ २.२१.१.२५

२. भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ १८७४॥ २.२१.१.२६

३. स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥
ॐ स्वस्ति नो बृहस्पतिर्दधातु ॥ १८७५ ॥ ॥९ (कू)॥ २.२१.१.२७

[धा॰ २६ । उ॰ १ । स्व॰ ६ ।]

इति नवमप्रपाठकस्य तृतीयोऽर्धः, नवमप्रपाठकश्च समाप्तः ॥ ९-३ ॥

इत्येकविंशोऽध्यायः ॥ २१ ॥

॥ इत्युत्तरार्चिकः समाप्तः ॥

॥ इति सामवेदसंहिता समाप्ता ॥

|| ॐ नमः सामवेदाय ||

नीलोत्पलदलाभासः सामवेदो हयाननः ।
अक्षमालान्वितो दक्षे वामे कम्बुधरः स्मृतः ॥